श्रीविदेहकन्यकायै नमः

मैथिलवंशोद्भवमहामहोपाध्यायपण्डितवर-
श्रीजयदेवशर्ममिश्रेण रचिता

# शास्त्रार्थरत्नावली

तदात्मजेन काव्यतीर्थ, एम्० ए०, डी० लिट्० इत्युपाधिभाजा
प्रयागविश्वविद्यालयप्राच्यदर्शनाध्यापकेन
श्रीमदुमेशशर्ममिश्रेण
संशोध्य प्रकाशिता

मुमुक्षु भवन वेद वेदांग विद्यालय
ग्रन्थालय
आगत क्रमांक......
दिनांक......

१९४०

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीविदेहकन्यकायै नमः

मैथिलवंशोद्भवमहामहोपाध्यायपण्डितवर-
श्रीजयदेवशर्ममिश्रेण रचिता

# शास्त्रार्थरत्नावली

तदात्मजेन काव्यतीर्थ, एम्० ए०, डी० लिट्० इत्युपाधिभाजा
प्रयागविश्वविद्यालयप्राच्यदर्शनाध्यापकेन
श्रीमदुमेशशर्ममिश्रेण
संशोध्य प्रकाशिता

१९४०

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# विषयानुक्रमणिका:—



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# आमुखम्

पाणिनीयसूत्राणां सूक्ष्मेक्षिकया विवेचनम्प्रायश आदितो भगवतः कात्यायनादेवारब्धमिति सुप्रसिद्धम्। स एव विवेचनप्रकारः श्रीमता भट्टोजिदीक्षितेन सिद्धान्तकौमुद्यां प्रौढमनोरमायां शब्दकौस्तुभे च विस्तारितः प्रचारितश्च सर्वत्र विशेषतो वाराणस्याम्। श्रीमान् नागेशभट्टः प्रयागादुत्तरतः स्थिते शृङ्गवेरपुरे वसन् तमेव विचारक्रमं विस्तारयामास शब्देन्दुशेखरपरिभाषेन्दुशेखरादिग्रन्थद्वारा। तस्यैव वंशजाः शिष्याश्च वाराणस्यामुषित्वा तत्र तद्विचारप्रचुरमेव पाठक्रमं प्रवर्तयामासुः। एतेषामेव शिष्यप्रशिष्यपरम्परायाम्बभूवुः प्रातःस्मरणीयाः श्रीमन्तो राजारामशास्त्रिपादाः—यैः किल मिथिलानवद्वीपशैलीप्रभावितैर्नागेशभट्टपरिपाटी सूक्ष्मात्सूक्ष्मतरीकृता। इतः परं शैलीद्वयसम्मेलनेन व्याकरणशास्त्रेऽपूर्वः संस्कारः समजनि। श्रीराजारामशास्त्रिपादानाम्परःशतान्तेवास्यग्रेसरा बभूवुस्सकलतन्त्रापरतन्त्रप्रतिभाः श्रीमन्तो बालशास्त्रिपादाः। इयान् प्रभाव आसीदेतेषां यदखिलभारतवर्षे व्याकरणशास्त्राध्यायिनः काशीमागत्य तेभ्य एवाधीत्यात्मनः कृतकृत्यान् मेनिरे। एतेषामेव महात्मनां शिष्याः शास्त्रस्य चत्वारः स्तम्भरूपा बभूवुः—श्रीशिवकुमारमिश्र-श्रीदामोदरशास्त्रि-श्रीगङ्गाधरशास्त्रि-श्रीतात्याशास्त्रिमहाशयाः॥

राजारामशास्त्रिसमयमारभ्य काश्यामन्यत्र च शास्त्रार्थाभिधविचारक्रमस्य प्रचारः प्रचुरतया आसीत्। एतेषु शास्त्रार्थेषु शास्त्रमर्मविचारस्य सूक्ष्मता परां काष्ठां प्रापिता।

शास्त्रार्थरत्नावलीग्रन्थस्यास्य निर्मातारः पूज्यपादाः श्रीजयदेवमिश्रा मिथिलालङ्कारभूता आदौ मिथिलायामेव श्रीबालशास्त्रिणाम्प्रधानशिष्येभ्य इदानीमपि काशीक्षेत्रं भूषयद्भ्यः श्रीरजेमिश्रेभ्य उक्तशास्त्रिप्रणाल्यैव व्याकरणशास्त्रमधिगम्य पुनः काशीमागत्य प्रथमं श्रीबालशास्त्रिणामेव सविधे ततः परं श्रीशिवकुमारमिश्राणां सकाशात् व्याकरणशास्त्रे शास्त्रान्तरेषु च परमं नैपुण्यं प्रापुः। काश्यामेव भूतपूर्वमिथिलेशसंस्थापितदरभङ्गापाठशालायां श्रीशिवकुमारमिश्रैः सहैव शास्त्राण्यध्यापयामासुश्च। यावज्जीवं च काश्यां विद्वद्गोष्ठीषु शास्त्रार्थविचारप्रचारे दत्तचित्तास्तन्मया इव बभूवुः। एते च विचारा न केवलं व्याकरणेऽपि तु न्यायशास्त्रे (विशेषतः शब्दखण्डे) वेदान्ते च प्रवर्तिता आसन्। सर्वत्र चेमे महात्मानोऽकुण्ठितधिषणाः स्वविचारैस्तत्त्वविदुषां सज्जनानां मनांसि सन्तोषयामासुः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नवीनपरीक्षानुसारिण्यामध्ययनाध्यापनपद्धतौ सूक्ष्मविचाराणामनवकाशं प्रसमीक्ष्य दूयमानचेतसः श्रीमन्तो मिश्रपादाः शास्त्रार्थशैल्याः सर्वथा लोपो मा भूदिति मनसि निधाय तच्छैलीरक्षणाय शास्त्रार्थरत्नावलीग्रन्थमिमं जग्रन्थुः। परीक्षापरिक्षीणधिषणेष्वपि केचन पुण्यभाजः स्युरद्यत्वेऽपि ये रसयिष्यन्ति रसमस्य ग्रन्थस्येत्याशास्ते

विश्वविद्यालय<br>प्रयाग

ग्रन्थकर्तृशिष्याणामन्यतमः<br>**गङ्गानाथशर्मा**

---

# निवेदनम्

श्री१०८काशीविश्वनाथस्य कृपयाऽद्य तातचरणैर्विरचितायाः शास्त्रार्थरत्नावल्यास्तृतीयं संस्करणं शास्त्रैकमर्मरसिकानां पुरतः संस्थाप्यातितरां मुदमनुभवामि। करालकलिकालकवलितायाः शास्त्रानुशीलनप्राचीनपरिपाट्याः क्रमशो ह्रासतां गताया अपि शास्त्रार्थविचारतत्परेषु पण्डितेषु कीदृशः समादरोऽद्यापि वर्त्तत इति सुस्पष्टमेवास्य ग्रन्थरत्नस्य तृतीयेन संस्करणेनैव। परमतत्त्वानुसन्धानपरस्य शास्त्रार्थविचारस्य ह्रासो भवितुमर्हति न पुनः सर्वथा लोप इति।

'जयनिवास', प्रयाग<br>कार्तिकीयपूर्णिमायां गुरौ<br>१९९७ वैक्रमाब्दे

**श्रीमदुमेशशर्ममिश्रः**

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# भूमिका

अद्य पूज्यपादानां तातचरणानां महामहोपाध्यायश्रीजयदेवशर्ममिश्राणां कृतेः शास्त्रार्थरत्नावल्याः द्वितीयं संस्करणं विद्यानुरागिणां पुरतः स्थाप्यते। पल्लवग्राहिपाण्डित्यसम्पादकपरीक्षाप्रणालीपरिशीलनतत्परैरद्यत्वेऽपि शास्त्रार्थविचार आद्रियत इत्यानन्दं परां काष्ठां प्रापयति।

शास्त्रार्थविचारादर्शभूतानामेतेषां तातपादानां संक्षिप्तेतिवृत्तं तैरेव विरचितया व्युत्पत्तिवादजयाटीकया सह पूर्वमेव प्रकाशितम्। तत्र यः कश्चिदंशस्त्रुटित आसीत्सोऽत्र प्रकाश्यते।

एतेषां गुरुवराणां पितृचरणाः पण्डितचित्रनाथशर्मणश्चतुर्षु सोदरेषु ज्येष्ठाः। तेऽपि चत्वारो भ्रातरो नानाशास्त्रेषु पण्डिता आसन्। तत्रापि पोषनशर्म्मा व्याकरणन्याय (शब्दखण्ड) धर्मशास्त्रादिष्वतिनिपुणो बृहत्कुटुम्बपरिपोषको बभूव। माता चास्मद्गुरुचरणानां शचीनाम्नी सर्वगृहकार्येष्वतिपट्वी बृहत्कुटुम्बभारमाजीवं दधौ। एतेषां पण्डितप्रवराणां मातृकुलेऽपि सर्वे विद्वान्सो बभूवुः। तत्राप्येतेषां मातामहः कुलमणिशर्मा मातुलौ च श्रीमंणिरत्नमणिशर्माणौ मिथिलाधीशप्रवर्त्तितपाण्डित्यपरिचायकधौतपरीक्षायां लब्धप्रतिष्ठा आसन्। एते सर्वेऽपि बलिष्ठा दीर्घजीविनः काश्यां मणिकर्णिकायां तारकं जपन्तो भोगायतनं तत्यजुः।

तातचरणाः षट्सु सोदरेषु ज्येष्ठाः। सोदरा चैतेषामेका सर्वज्येष्ठा। तत्र वासुदेवकेशवशर्माणौ ज्यौतिषशास्त्रे धर्मशास्त्रे च पूर्णविद्वान्सौ जातौ। जनार्दनमुकुन्दशर्माणावल्पमेवाधीत्य गृहकार्ये एव संलग्नौ। चतुर्थो मधुसूदनशर्मा च लौकिकाखिलव्यवहाराचारदक्षः प्रायो ज्यौतिषशास्त्रवर्जमन्येषु सर्वेषु शास्त्रेषु लब्धप्रकर्षपाण्डित्यः शतशश्छात्रान् पाठयन् काशीस्थपण्डितसमाजेषु च शास्त्रार्थविचारेऽद्भुतवैदुष्यं प्रख्यापयन् भूनेत्ररत्नैकमिते खिस्ताब्दे काश्यामेवैहिकशरीरं परित्यज्य विश्वेश्वरसायुज्यं प्राप्तवान्। तद्रचितानि मधुसूदनीतिनामकानि व्याकरणशब्दखण्डविषयकानि क्रोडपत्राणि पण्डितमण्डलीषु प्रसिद्धानि तस्य प्रकर्षपाण्डित्यपरिचायकान्यद्यापि सन्त्येव।

महात्मनामेतेषां पितृव्यपुत्रा अपि नानाशास्त्रचणा आसन्। तत्रोल्लेखनयोग्यो भगवान्दत्तशर्म्मणः पुत्रो दामोदरशर्मा। स च खलु पूर्णव्युत्पन्नो ज्यौतिषशास्त्रवैदुष्ये तु तत्समानकालीनेषु प्रायः तत्समोऽन्यो नैवासीदिति श्रूयते। लौकिकविषयेष्वपि तस्य विचारचमत्कारः सर्वथा प्रशंसनीय एवासीत्। तद्रचिता भास्कराचार्यविरचितायाः लीलावत्याः 'वासना' तु विदुषां मध्ये प्रसिद्धैव। अन्येऽपि ज्यौतिषशास्त्रविषयका बहवो निबन्धास्तेन रचिताः ये अप्रकाशिता एवावतिष्ठन्ते। कालि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काकुशेश्वरादिदेवतानां स्तोत्राण्यपि बहूनि तेन रचितानि। इत्थं छात्रानध्यापयन् पाण्डित्यं प्रकाशयन् दिक्षु कीर्त्ति धवलयन्नसमय एव नश्वरं शरीरं तत्याज।

तातचरणानां क्रमशस्त्रिस्रः स्त्रियो बभूवुः। तत्र प्रथमा स्त्री तु ससन्ताना नष्टा। द्वितीयाप्यल्पकालेनैव परलोकं गता। तस्यां पुत्रद्वयं—ज्यायांस्त्वस्य निबन्धस्य लेखक एव, कनीयान् श्रीरमेशः प्रवेशपरीक्षापर्यन्तमाङ्गलभाषामधीत्याधुना गृहकार्यं करोति। विनष्टायान्तु तस्यामावामल्पवयस्कावास्व। अत आवयोः पालनाद्यर्थं तृतीयामुपायंस्त। तस्यामेकः पुत्रः श्रीश्रीकृष्णः पाश्चात्यशिक्षायाः पञ्चमश्रेण्यां पठति—कन्यकाद्वयञ्च। तयोर्विवाहसंस्कारस्तातचरणैरेव सम्पादितः।

ग्रन्थरचनातिरिक्ताऽपरा चिरस्थायिनी कीर्त्तिरूपैतेषां कृतिरेका पुष्करिणी मिथिलायां स्वनिवासग्रामे वर्तते। यस्याः पुष्करिण्याः 'शाके षट्श्रुतिनागभूपरिमिते ज्येष्ठे वलक्षे गुरौ', चतुरग्निविधानेन यागं गुरुवराः स्वयमेव सम्पादितवन्तः। एतद्विषयकनिम्नलिखितश्लोकास्तातचरणानां गुरुचरणैर्महामहोपाध्यायश्रीरजेशर्ममिश्रैर्विरचितास्तस्याः पुष्करिण्यास्तटे उट्टङ्किताः सन्ति—

आसीदत्र वखेडिशर्ममतिमान् यश्चित्रनाथाभिधो
विख्यातो मिथिलावनौ गजहराग्रामे निवासी कृती।
पुत्रास्तस्य बभूवुरुत्तमगुणास्तेष्वेव सर्वोत्तमो
दुर्द्धर्षो जयदेवशर्मशुभकृत्पाण्डित्यपारङ्गमः ॥१॥
काशीपण्डितमण्डलीमणिमहामालासुमेरूपमः
कीर्त्तिस्तोमसमस्तसोमविकसज्ज्योत्स्नाजगन्मण्डनः।
शास्त्रार्थे न हि कोऽपि येन तुलितो वैतण्डिकः पण्डितः
सासील्लब्धमहामहोत्तरपदोपाध्यायसत्पद्धतिः ॥२॥
कीर्त्तिः पुष्करिणीयमस्य विदुषो विद्याप्रसूता सती
तस्या दानविधौ च वैदिकगणः कल्पोक्तसम्भारतः।
श्रीचातुश्चरणैरयष्ट विधिभिर्वेदोदितैः कर्मठः
शाके षट्श्रुतिनागभूपरिमिते ज्येष्ठे वलक्षे गुरौ ॥३॥
तस्माद्वर्षयुगान्तरोत्तरगतश्रीभास्करेऽच्छे दले
श्रीकाशीमणिकर्णिकामरनदीतीरे जपँस्तारकम्।
दुःखागारशरीरमत्यजदथो तादृग्जगन्नश्वरं
काशीवासफलं फलं द्विजजनैर्मोक्षं प्रलेभे सुधीः ॥४॥

विश्वविद्यालय, प्रयाग
आश्विनकृष्णाष्टम्यां शनौ,
शाके १८५०

विदुषां वशंवदः
**श्रीमदुमेशमिश्रः**

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीः

श्रीगणेशाय नमः

# अथ शास्त्रार्थरत्नावली

नत्वा शम्भुपदारविन्दयुगलं ध्यात्वा गिरीन्द्रात्मजां
काश्यां श्रीजयदेवनामकसुधीः शास्त्रार्थरत्नावलीम् ।
बालानामुपकारिकां वितनुते सीताप्रसूभूमिजो
यां ज्ञात्वा ऋजुबुद्धयोऽपि समितौ ख्यातिं परां प्राप्नुयुः ॥

## १. वर्णात्कारः

कारप्रत्ययोऽपि न बाहुलकादिति। वर्णात्कार इत्यनेन प्राप्तः कारप्रत्ययो नेत्यर्थः। ननु वर्णात्कार इत्यस्य कोऽर्थः? न वर्णात् कारप्रत्ययो भवतीत्यर्थः; घटपटादिशब्दे प्रतिवर्णं कारप्रत्ययापत्तेः; नापि वर्णबोधकादित्यर्थः, घटपटादिशब्दे च घकारादयो न वर्णबोधका इति न कारप्रत्यय इति युक्तम्। ङीप्टाप्प्रत्ययादिशब्दानामपि वर्णबोधकत्वेन तेभ्योऽपि कारप्रत्ययापत्तेः; वर्णत्वव्याप्यधर्म्मावच्छिन्नबोधकादित्यर्थः। ङीबादिशब्दाश्च ङीप्त्वाद्यवच्छिन्नबोधका न च ङीप्त्वाद्या-वर्णत्वाव्याप्या इति न दोष इति युक्तमित्यपि न इगादिशब्देभ्यो ह्रस्व-दीर्घादिशब्देभ्यश्च कारप्रत्ययापत्तेः, वर्णत्वव्याप्यधर्म्मावच्छिन्नबोधकात् वर्णादित्यर्थः। इगादिशब्दाश्च न वर्णरूपा इति न दोष इत्यपि व्यामोह-मात्रं, ककारो धकार इत्यादावपि कारप्रत्ययानापत्तेः, सस्वरव्यञ्जनस्य केत्यादेः वर्णत्वाभावात्, वर्णत्वव्याप्यजात्यवच्छिन्नबोधकादित्यर्थः। इगादिशब्दाश्चेगादिपदवत्त्वावच्छिन्नबोधका नेत्वादिजात्यवच्छिन्नबोधका इति नोक्तदोष इत्यपि न साम्प्रतम्। कत्वादिजात्यवच्छिन्नतात्पर्यकात् तच्छब्दादपि कारप्रत्ययापत्तेः। न च वर्णत्वव्याप्यजातिविशिष्टात्कार

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यर्थः। वैशिष्ट्यञ्च स्वावच्छिन्नबोधकत्वेन तात्पर्यविषयत्वस्वविशिष्ट-शक्तिपर्याप्त्यधिकरणत्वोभयसम्बन्धेन। तत्र वैशिष्ट्यञ्च स्वावच्छिन्ननि-रूपितत्वस्वेतरधर्म्मावच्छिन्नानिरूपितत्वोभयसम्बन्धेन। तच्छब्दनिष्ठशक्तेः कत्वावच्छिन्ननिरूपितत्वेऽपि तदितरघटत्वाद्यवच्छिन्ननिरूपितत्वस्यापि सत्त्वेनापत्त्यभावादिति वाच्यम्। वैयाकरणमते शब्देऽपि प्रातिपदिकस्य शक्तत्वेन कुत्रापि कारप्रत्ययानापत्तेः। न च शब्दे भिन्ना शक्तिरिति नैका शक्तिरुभयनिरूपितेति न लक्ष्यासंग्रहो दोष इति वाच्यं, शब्दार्थयोरेकस्या एव शक्तेः स्वीकारादन्यथा सकृदुच्चरितन्यायेन शब्दार्थोभयबोधस्यैकेन पदेनाभावप्रसंगात्; 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृत'[1] इति वचनविरोधापत्तेश्च।

अत्रोच्यते—वर्णविशिष्टात् कारप्रत्यय इत्यर्थः। वैशिष्ट्यञ्च स्वाद्यवय-वकत्व-स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकवर्णत्वव्याप्यजात्यवच्छिन्न-बोधकत्वेन तात्पर्यविषयत्वस्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन। तत्र वैशिष्ट्यं. स्वेतरत्व-स्वसमभिव्याहृताकारेतरत्वोभयसम्बन्धेन। तच्छब्दे तकारविशिष्टदकारघटितत्वेन नापत्तिः। अकार इत्यादौ व्यपदेशिवद्भावेन स्वाद्यवयवकत्वमिति सर्वमुपपन्नमित्यलम्। एवकार इत्यादावेवस्य कार एवकार इति करोतेर्घञ् न कारप्रत्ययः बाहुलकाद्वा कारप्रत्यय इति दिक्।

---

## २. रप्रत्याहारः

लण्सूत्रघटकाकारोऽनुनासिकत्वादित्संज्ञकस्तेन रप्रत्याहारसिद्ध्या तवल्कार इत्यत्र रपरपदेन लकारस्य सिद्धिरन्यथा रपर एव स्यादेतद-भिप्रायेणैव 'लपरत्वं वक्ष्यामी'त्युक्तं भाष्ये[2], रप्रत्याहाररूपेणेति व्याख्यानेन कैयटेन च स्पष्टीकृतमिदम्। शेखरकृता च 'लपरत्वं वक्ष्यामी'[3]त्यस्य उरण्रपरो लपरश्चेति सूत्रकरणेन तवल्कारसिद्धिरित्याशयं वर्णयित्वा-ऽनुनासिकत्वेनेत्वं कृत्वा कृतो रप्रत्याहारः खण्डितः। तथा हि—रप्रत्याहारे तेनैव सिद्धेऽतोल्लृान्तस्येति सूत्रे लकारोच्चारणस्य वैयर्थ्यं स्यात्। न च

---

१—वाक्यपदीये प्रथमकाण्डे, १२४ कारिका।

२-३ महाभाष्ये तुल्यास्यसूत्रे, पृ० १०१. (बालशास्त्रिनिर्मितटिप्पणयुक्त-संस्करणे)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेन रप्रत्याहारस्यानित्यत्वं ज्ञाप्यतेऽत एव रदाभ्यामित्यादौ रपदेन न प्रत्याहारग्रहणमिति वाच्यम्, अनित्यत्वज्ञापने फलाभावात्; रप्रत्याहारस्य नित्यत्वेऽप्युभयगतिरिह भवतीत्यनेनैव क्वचिद्रमात्रग्रहणसम्भवात्।

किञ्च रप्रत्याहारोऽनित्य इति ज्ञापितस्य कोऽर्थः ? न रत्वावच्छेदेन रेफलकारनिरूपिता या शक्तिः सा अनित्येति; यतः अनित्येत्यस्य कदाचिदस्ति कदाचिन्नास्तीत्यर्थः। स च न सम्भवति, 'सिद्धे शब्दार्थसम्बन्ध' इत्यनेन शक्तिरूपशब्दार्थसम्बन्धस्य नित्यत्वावधारणात्। कस्याञ्चिद्व्यक्तौ सा शक्तिरस्ति कस्याञ्चिन्नास्तीत्यपि नार्थः; केवलरत्वावच्छिन्ननिरूपितलौकिकशक्त्यैव बोधतात्पर्य्ये तावन्मात्रबोधोपपत्तावनित्यत्वकल्पनानर्थक्यात्। अत एव नित्यत्वाभावेप्यणादिशब्दे न क्वचित्प्रत्याहारस्य क्वचिदणादिप्रत्ययस्य बोधः। तस्माल्लकारग्रहणादकारेऽनुनासिकत्वाभाव एव युक्तः। किञ्चाकारस्यानुनासिकत्वे तेनैव यप्रत्याहारं कृत्वा यण्पदस्थाने यपदमिण्पदस्थाने इअपदमण्पदस्थाने अअपदं पठित्वा तत्तत्स्थले णकाराकरणलाघवेन लण्सूत्रे णकारोच्चारणवैयर्थ्यापत्तिः। यद्यप्यण् इण्स्थाने अअ, इअ, इतिकरण एकमात्रागौरवं तथापि यण्स्थाने यकरणे यत्वस्यैव शक्ततावच्छेदकत्वेन यण्त्वापेक्षया लाघवाण्णकाराकरणलाघवाच्च तावन्मात्रगौरवस्याकिञ्चित्करत्वात्। किञ्चानुबन्धानां प्रत्याहारजन्यबोधविषयत्वाभावे भाष्याभिप्रेतस्य लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वस्य हेतोः पक्षतावच्छेदकं प्रत्यव्यापकत्वं स्यात्। तथा हि—अनुबन्धाः प्रत्याहारजन्यबोधविषयत्वाभाववन्तः लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वादित्यनुमानप्रयोगः। आदिरन्त्येनेत्येतद्वाक्यार्थबोधात्प्रागेव तस्य लोप इत्यनेनानुबन्धस्य लोपादादिरन्त्येनेत्यनेन शक्तिग्रहकाले मध्यगत्वेन तस्य ग्रहणन्न भवतीति तद्भाष्याशयः। इदञ्चानुमानमनुबन्धत्वरूपपक्षतावच्छेदकावच्छेदेन चिकीर्षितं, न तु तत्सामानाधिकरण्येन, सकलानुबन्धाग्रहणस्य विवक्षितत्वात्। अनुबन्धत्वावच्छेदेन चानुमितावनुबन्धत्वव्यापकत्वं हेतावपेक्षितं तदिदानीं न स्याद्धल्प्रत्याहारसिद्धिकाले अच्पदार्थनिष्पात्योपदेशेऽजित्यनेन लण्सूत्रघटकाकारस्येत्वभावेन तस्य लोप इति शास्त्रीयोद्देश्यतावच्छेदकत्वाभावेन भाष्योक्तहेतोरभावादित्संज्ञायोग्यत्वरूपानुबन्धत्वस्य च सत्त्वात्। नागेशमते तु अनुनासिकत्वाभावादेवेत्संज्ञायोग्यत्वरूपपक्षतावच्छेदकस्यापि तत्राभावेन नाव्यापकत्वम्।

नन्वनुबन्धत्वं नेत्संज्ञायोग्यत्वमपि त्वित्संज्ञकत्वमेव। तच्च हल्प्रत्याहारसिद्धिकाले तत्र नास्तीति हेतोः पक्षतावच्छेदकस्य च तत्राभावान्ना-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यापकत्वशंका प्राचामपीति चेत्—न, तावताऽव्यापकत्वाभात्रेनानुमानस्यादुष्टत्वेऽपि हल्प्रत्याहारे मध्यगत्वेन ग्रहणापत्तेर्दुर्वारत्वात्। नागेशमते तु हयवरेत्यादौ हकाराकारादेरिव तस्याप्युच्चारणार्थत्वेन मध्यगत्वेन ग्रहणापत्त्यभावात्। अनुनासिकत्वं वदतां प्राचान्तु प्रत्याहारार्थत्वेनोच्चारणार्थत्वस्याशक्यवक्तव्यत्वात्। न च तस्य हल्प्रत्याहारे ग्रहणेऽपि हल्निमित्तकस्य हल्स्थानिकस्य वा कस्यचित् कार्य्यस्य तत्र प्रसक्त्यभावेनादोप एवेति वाच्यम्। लद्व्यस्थसर्वतकारादीनां झलादिपदेन ग्रहणायाद्यन्ताक्षिप्तसमुदायघटकवृत्तिजात्यवच्छिन्नस्य संज्ञेत्यर्थस्यैवादिरन्त्येनेत्यस्य सत्त्वेन लणित्यकारवृत्त्यत्वजात्याश्रयस्य सर्वस्य ग्रहणे सोऽस्ति मा भाँस्त्रायस्वेत्यादावनुस्वाराद्यापत्तेः। न च हल्प्रत्याहारसिद्धेः प्राक् वल्झल्पदशक्तिग्रहे बाधकाभावेन तदानीं कपयघटकयकारे लोपीयोद्देश्यतावच्छेदकेत्त्वस्याभावेनेत्संज्ञायोग्यत्वरूपपक्षतावच्छेदकस्य च भावेन नागेशस्यापि निरुक्तानुमाने हेतोः पक्षतावच्छेदकाव्यापकत्वं वल्झल्प्रत्याहारे यकारग्रहणञ्च समानमेवेति वाच्यम्। इदानीं हल्वल्पदयोस्समानार्थकत्वेनोभयसंज्ञाकरणसामर्थ्यात् हल्प्रत्याहारसिद्धेः प्राक् लान्तपदशक्त्यग्रह इति कल्पनेनादोषात्। किञ्च तन्मतेऽपीत्संज्ञकत्वरूपानुवन्धत्वस्यैव पक्षतावच्छेदकत्वेन हल्प्रत्याहारसिद्धेः प्राक् तद्यकारे तस्याप्यभावेन न तदव्यापकत्वं हेतोः पुनः पुनरकारोच्चारणेनोच्चारणार्थवर्णरहितहलां वर्णसमाम्नायस्थानामग्रहणं प्रत्याहारेणेति कल्पनया वल्झल्प्रत्याहारे यकारग्रहणाभावोप्युपपन्नः। न चादिरन्त्येनेत्येतदीयोद्देश्यतावच्छेदकाक्रान्तत्वेन ग्रहणं दुर्वारमेवेति वाच्यम्, तादृशोच्चारणेन तादृशहलामग्रहणार्थत्वं बोध्यते। अन्त्येनेतासहित आदिर्मध्यगानामादिसाहचर्य्यात् ग्रहणार्थानां संज्ञेत्यर्थेनादोषात्। न चोक्तमनुमानं न युक्तं णकाराद्यनुवन्धानां हल्प्रत्याहारजन्यबोधविषयत्वस्यैव सत्त्वेन बाधादिति वाच्यम्, अनुवन्धानां स्वघटितसमुदायोपलक्षितशक्तिमत्प्रत्याहारजन्यबोधविषयत्वाभावस्यैव साध्यत्वेनाइउण्घटकणकारघटितसमुदायोपलक्षितशक्तिमत्त्वस्य हल्पदेऽसत्त्वेन तत्पदबोध्यत्वसत्त्वेऽपि बाधाभावादच्पदस्यैव तादृशशक्तिमत्त्वेन तत्पदबोध्यत्वाभावस्यैव साध्यत्वात्। न च तथा साध्यशरीरेऽपि हल्पदबोध्ये लण्घटकणकारे बाधो दुरुद्धरः। एवमइउण्घटकणकारेऽपि अल् अश् अम्पदबोध्ये तण्णकारघटितसमुदायोपलक्षितशक्तिमदलादिपदबोध्यत्वाभावसाधनेऽपि बाध एवेति वाच्यम्। अनुवन्धाः स्वविशिष्टवर्णाघटितसमुदायोपलक्षितशक्तिमत्प्रत्याहारबोध्यत्वाभाववन्तः, लोपशास्त्रीयोद्देश्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तावच्छेदकाक्रान्तत्वादित्येवानुमितेराकारः। वैशिष्ट्यञ्च स्वभिन्नत्वस्ववृत्तिवर्णत्वव्याप्यजातिमत्त्वोभयसम्बन्धेन। अल् अश् अम् हल् वल् रल्-प्रत्याहारवोध्यत्वेऽप्यइउण् लण्णकारयोर्न्न बाधस्तेषु पदेषु तादृशणकार-विशिष्टाननुबन्धणकारघटितसमुदायोपलक्षितशक्तिमत्त्वेन तेषां पदाना-मवोध्यत्वस्यासाधनादित्यदोषात्। यादृशसमुदाये अनुबन्धसजातीयो द्वितीयो वर्णो नास्ति तादृशसमुदायवोधकप्रत्याहारावोध्यत्वमेवानुबन्धे साध्यत इति निष्कर्षः।

**गुरुचरणास्तु**—सर्वेषां प्रत्याहाराणामाद्यन्ताक्षिप्तसमुदायघटकव-र्णवृत्तिजात्यवच्छिन्नवोधकत्वमेव प्रत्याहारजन्यवोधीयघटकत्वावच्छिन्न-विषयत्वस्यैवाभावः साध्यते। ततश्चानुवन्धानां तादृशसमुदायघटकत्वेना-ग्रहणेऽपि तादृशसमुदायघटको योऽनुबन्धेतरोऽनुवन्धसदृशस्तद्वृत्ति-धर्म्मो णत्वादिस्तेन रूपेणानुवन्धानां ग्रहणेऽपि न बाधशङ्केत्याहुः।

ननु प्रत्याहारेष्वनुवन्धानां कथमज्ग्रहणेषु ग्रहणन्नेतिग्रन्थे अच्प्रत्या-हारस्यैवोल्लेखेन भाष्येऽप्यज्वोधकस्याइउणित्यादिसूत्रचतुष्टयस्योपादाने-नैवैतद्ग्रन्थस्य प्रवर्त्तनेन अइउणित्यादिसूत्रचतुष्टयघटकानुबन्धानेव पक्षीकृत्याच्प्रत्याहारजन्यवोधविषयत्वाभावः साध्यत इत्येव प्रतीयत इति लण्घटकाकारेऽनुवन्धत्वेऽपि नाव्यापकत्वशङ्का, तदकारस्योच्चारणार्थत्वा-भावेन हकाराकारादिवैलक्षण्येन हल्प्रत्याहारे ग्रहणापत्तिरपि न वाच्या, अञ्झलोर्द्वैराश्येन वर्णसमाम्नाये पाठेन तुल्यजातीयांस्तुल्यजातीयेषूपदि-शत्यचोऽज्जु हलो हल्ष्विति भाष्येण च हकाराद्यकारवदइउणितिणकारा-दिवच्च तस्याकारस्याप्यग्रहणार्थत्वरूपाप्राधान्यादादिरन्त्येनेत्यस्य ग्रहणा-र्थत्वरूपप्राधान्येनादिसदृशमध्यगवर्णनिरूपितशक्तिमत्त्वबोधकत्वात् न कोऽपि दोषः **प्राचामिति** चेन्न, हलादिप्रत्याहारेऽपि सूत्रान्तरस्थानुवन्धेऽपि दोषसद्भावे प्रत्याहारविशेषसूत्रविशेषोपादानपरवार्त्तिकभाष्यसूचितस्या-न्यप्रत्याहारेऽन्यसूत्रस्थानुवन्धस्य ग्रहणाग्रहणयोर्विशेषाभावस्यासङ्गत्या-पत्तेः। न च **नागेशमते**ऽपि हश्प्रत्याहारे हयवरट्सूत्रस्थानुवन्धग्रहणे दोषसद्भावेन प्रत्याहारादिविशेषोपादानासङ्गतिरेवेति वाच्यम्, हकारादिषु पुनः पुनरकारोच्चारणेनोच्चारणार्थवर्णरहितहलामग्रहणवोधनेनादोषात्, हश्प्रत्याहारे टग्रहणे तद्विषयप्रयोगाणामुक्तभाष्यादनभिधानकल्पनाच्च।

ननु को यष्टिकष्टीकत इति प्रयोगस्य सुप्रसिद्धत्वेन कथमनभिधान-मिति चेन्न, टकारसन्निहितस्थानिकेन हश्निमत्तिककार्येण घटितस्य लक्ष्यस्योक्तभाष्यादनभिधानं कल्प्यत इत्यदोषात्। इत्थञ्च लण्सूत्रस्था-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारस्योच्चारणार्थत्वमेव न त्वनुनासिकत्वेन प्रत्याहारार्थत्वम्। उरण्रपर इत्यत्र लपरश्चेति वक्तव्यमेवेति नागेशानुयायिनः॥

---

## ३. तुल्यास्यप्रयत्नं सवर्णम् १।१।९

तुल्यावास्यप्रयत्नौ यस्येत्यर्थः। जनकत्वं षष्ठ्यर्थ इत्युक्तं शेखरे। तत्र तुल्यावित्यनुपपन्नम्। एकशेषस्योपपत्त्यभावात्। आस्यविशेषणं तुल्यं प्रयत्नविशेषणं तुल्यः। अनयोर्नपुंसकपुल्लिङ्गयोर्नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामित्यनेन नपुंसकस्यैवैकशेषात्तुल्ये इत्यस्यैवापत्तेः; शास्त्रान्तरस्य चैकशेषविधायकस्य प्रवृत्त्यभावाच्च। अद्वन्द्वतत्पुरुषविशेषणानामिति निषेधान्नपुंसकमनपुंसकेनेत्यस्य न प्रवृत्तिरिति तु न वाच्यम्, त्यदादितः शेषे पुन्नपुंसकतो लिङ्गेत्यस्यैव तेन निषेधात्। विनिगमकाभावेनैतस्यापि तेन निषेधाङ्गीकारेऽप्येकशेषानुपपत्तेस्तादवस्थ्यात्, अविशेषेण पुमाँस्त्रियेत्यस्यापि निषेधापत्त्या भगवतोर्भवानीविश्वनाथयोरित्याद्यनुपपत्तेश्च।

अत्रोच्यते—प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितव्यक्तिनिष्ठनानाविशेष्यताकशाब्दबोधेच्छायामेव नानाशब्दोच्चारणप्रसङ्गः 'प्रत्यर्थं शब्दाभिनिवेश' इति भाष्यात्, प्रतिप्रकारतमिति हि प्रत्यर्थमित्यस्यार्थस्तत्रैवैकशेषस्योपयोगः। यत्र च प्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितव्यक्तिनिष्ठैकविशेष्यताकबोधनेच्छा तत्रैकस्यैव शब्दस्योच्चारणमिति नैकशेषस्योपयोग इति प्रकृते एकशेषं विनैव तुल्यत्वनिष्ठैकप्रकारताकव्यक्तिद्वयबोधजनकैकतुल्यशब्दस्य द्विवचनान्तस्य प्रयोग इत्यदोष इति। जनकत्वस्य षष्ठ्यर्थत्वेन यद्वर्णजनकावास्यप्रयत्नौ तुल्यावित्यर्थलाभादाभ्यन्तरप्रयत्नस्य लाभस्तस्यैव वर्णोत्पत्त्यव्यवहितप्रागभावित्वेन वर्णं प्रति जनकत्वात्, बाह्यप्रयत्नस्य च वर्णोत्पत्त्युत्तरभावित्वेन तदजनकत्वाच्च।

ननु तुल्यास्यप्रयत्नत्वमिकारैकारयोरपि सत्त्वेन सावर्ण्यापत्तिः, यावत्स्थानसाम्यस्य विवक्षणान्न दोषोऽत एव यजुष्येकेषामितिनिर्देशसङ्गतिरिति तु न वाच्यम्। यावन्ति स्थानानि तैस्साम्यस्य केनापि वर्णेन कस्यापि वर्णस्याभावेन सूत्रार्थस्यैवाप्रसिद्ध्यापत्तेः। ननु यद्वर्णजनकानि स्थानानि यावन्ति तावत्स्थानजन्यो यो वर्णस्तयोस्सावर्ण्यमित्यर्थेन एकारस्य जनके कण्ठतालुनी तदुभयजन्यत्वस्य तालुस्थानमात्रजन्य इकारेऽभावेन नैकारेकारयोस्सावर्ण्यापत्तिः, अकाराकारादीनाञ्च तत्स-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्त्वान्नार्थाप्रसिद्धिश्चेति चेन्न। यत्तच्छब्दार्थयोरननुगतत्वेनैकेन सूत्रेण सकललक्ष्याणामव्यापनाच्छास्त्रस्य यत्किञ्चिद्वर्णविषयकत्वापत्तेः। किञ्च तुल्यास्यप्रयत्नो वर्णस्सवर्ण इत्यर्थे अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णः स्यात्ततश्चोपेन्द्र इत्यादावपि दीर्घापत्तिः। न च तर्हि सवर्णसंज्ञावचनस्य तत्र तत्र सवर्णपदस्य चाव्यावर्त्तकत्वेन वैयर्थ्याद्यस्य तुल्यास्यप्रयत्नस्तस्य सवर्ण इत्यर्थेनादोष इति वाच्यम्, तथासत्यननुगमापत्त्या सकललक्ष्याणामसंग्रहापत्तेः, संज्ञाविधायके सवर्णपदस्य सवर्णशब्दपरत्वेन शब्दस्य च घटादिवत्सनिरूपकत्वाभावेन तस्य सवर्णो नान्यस्येति वक्तुमशक्यत्वाच्च। न हि घटो देवदत्तं प्रत्येव घटो न यज्ञदत्तं प्रतीति केनाप्युच्यते। किञ्च मिथः सवर्णमित्यप्ययुक्तमेव, सवर्णपदस्य शब्दपरत्वेन तत्र मिथः पदार्थस्यान्वयायोग्यत्वादिति चेन्मैवम्। वर्णविशिष्टो वर्णः सवर्ण इति सामान्यतोऽर्थः सवर्ण इत्यन्वर्थसंज्ञया सदृशत्वसमानाधिकरणसवर्णपदवानित्यर्थकः। पश्चात् कस्य सदृश इति जिज्ञासायां सम्बन्धिशब्दमहिम्ना यद्वर्णविशिष्टस्तत्सदृश इत्यननुगता एवार्थाः। स्थानिवदादेश इत्यादौ यथा प्रथमतः आदेशः स्थानिवद्भवतीति सामान्यतोऽवगतौ किं कस्य स्थानिनस्सदृश इति जिज्ञासायां यो यस्य स्थानी स तस्य सदृश इति विशिष्यैवार्थः प्रतीयते इति नान्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णो न वा मिथः पदार्थस्याननन्वयः सादृश्यस्य परस्परसम्बन्धित्वात्। वैशिष्ट्य एव मिथः पदार्थस्यान्तर्भूतत्वान्न पृथक् तस्य प्रवेशः। वैशिष्ट्यदानेनैवाद्यदोषस्यापि परिहारः। तथा हि—स्वविशिष्टो वर्णः स्वसवर्ण इति फलितं, वैशिष्ट्यञ्च स्वजनकस्थानजन्यत्व–स्वाजनकस्थानाजन्यत्व–स्वजनकस्थाननिष्ठजनकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रतियोगित्व–स्वजनकप्रयत्नजन्यत्व–स्वाजनकप्रयत्नाजन्यत्वैतत्पञ्चभिस्सम्बन्धैः। आद्यसम्बन्धनिवेशात् कचयोर्न सावर्ण्यम्। द्वितीयसम्बन्धनिवेशादेकार इकारस्य न सवर्णः। तृतीयसम्बन्धनिवेशादेकारस्येकारो न सवर्ण एकारजनके कण्ठस्थाने जनकत्वसम्बन्धेनेकारो नेत्याकारकाभावप्रतियोगित्वस्यैवेकारे सत्त्वात्। चतुर्थसम्बन्धनिवेशाच्चकारयकारयोर्न सावर्ण्यम्। पञ्चमसम्बन्धनिवेशादेकारैकारयोर्न सावर्ण्यम्। 'विवृतावेङौ ताभ्यामै औ तथैव चे'ति-शिक्षावचनेनैकारस्य विवृततरत्वस्य 'विवृतं स्वराणा'मितिवचनेन विवृतत्वस्य च सत्त्वात्। जनकत्वसम्बन्धस्य वृत्त्यनियामकत्वेनाभावप्रतियोगितानवच्छेदकत्वे तु स्वजनकस्थाननिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगिजनकतानिरूपितजन्यत्वाभाववत्वस्यैव पञ्चमसम्बन्ध-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थाने निवेश इति सर्वमुपपन्नम्। वृत्त्यनुसारेण तु तुल्यस्थानप्रयत्नौ वर्णौ परस्परं सवर्णसंज्ञावित्यर्थस्तत्र मिथः पदार्थस्तु परस्परन्तत्त्वञ्च सम्वन्ध-विशिष्टसम्वन्धवत्वम्। वैशिष्ट्यञ्च स्वभिन्नत्व-स्वनिष्ठसम्वन्धतावच्छेदक-धर्मावच्छिन्नसम्वन्धतावत्व-स्वप्रतियोग्यनुयोगिकत्व-स्वानियोगिप्रतियो-गिकत्वैतच्चतुष्टयसम्वन्धेन। सम्वन्धवत्ता च प्रतियोग्यनुयोगिकत्वैतदन्य-तरसम्वन्धेन। यथा देवदत्तयज्ञदत्तौ परस्परं नमत इत्यादौ देवदत्तस्य यज्ञदत्ते स्वकर्तृकनमस्कारकर्म्मत्वं सम्वन्धः, देवदत्ते यज्ञदत्तस्यापि स्वकर्तृकनमस्कारकर्म्मत्वं सम्वन्धस्तत्रान्तिमसम्वन्धे पूर्वसम्वन्धस्य वैशिष्ट्यमस्ति। यतः स्वं पूर्वसम्वन्धस्तद्भिन्नत्वमस्ति स्वनिष्ठं यत्सम्वन्धता-वच्छेदकं कर्तृतानिरूपकनमस्कारकर्म्मत्वत्वन्तदवच्छिन्नसंसर्गतावत्त्वम-प्यस्ति स्वप्रतियोगिदेवदत्तानुयोगिकत्वमप्यस्ति स्वानुयोगियज्ञदत्तप्रतियो-गिकत्वञ्चास्तीति भवति परस्परपदप्रयोगः देवदत्तो यज्ञदत्तं नमस्करोति। स च तं स्तौति तत्र न भवति परस्परपदप्रयोगस्तत्र देवदत्तस्य यज्ञदत्ते स्वकर्तृकनमस्कारकर्म्मत्वं सम्वन्धो यज्ञदत्तस्य च देवदत्ते स्वकर्तृकस्तुति-कर्म्मत्वं सम्वन्धस्तत्र स्वकर्तृकनमस्कारकर्म्मत्वत्वस्वकर्तृकस्तुतिकर्म्मत्व-त्वयोः संसर्गतावच्छेदकयोर्भेदेन द्वितीयसम्वन्धस्याभावात्, देवदत्तः परस्परं नमतीति यज्ञदत्तः परस्परं स्तौतीति वा न प्रयोगः। देवदत्तः स्वं नमति यत्र तत्र स्वकर्तृकनमस्कारकर्म्मत्वं सम्बन्धो देवदत्तस्य स्वस्मिन्नेव तत्रैकप्रतियोग्यनुयोगिकत्वेन स्वकर्तृकनमस्कारकर्म्मत्वत्वरूपैकधर्म्मा-वच्छिन्नसंसर्गतायाश्च सत्त्वेन सम्वन्धत्रयस्य सत्त्वेऽपि प्रथमसम्वन्धा-भावान्न तत्र परस्परं नमतीति प्रयोगः। यत्र देवदत्तः यज्ञदत्तं नमति यज्ञदत्तो विष्णुमित्रं नमति देवदत्तस्य यज्ञदत्ते स्वकर्तृकनमस्कारकर्म्मत्वं सम्वन्धः, यज्ञदत्तस्य च विष्णुमित्रे तादृशस्सम्वन्धस्तत्र प्रथमसम्वन्धस्य द्वितीयसम्बन्धे वैशिष्ट्यवारणाय तृतीयसम्वन्धः, प्रथमे द्वितीयसम्वन्धस्य वैशिष्ट्यवारणाय चतुर्थस्सम्वन्ध इति न तत्र परस्परपदप्रयोगः। कालिका-दिसम्वन्धेन तत्सम्वन्धवत्वमादायातिप्रसङ्गवारणायानुयोगित्वप्रतियोगि-त्वान्यतरसम्वन्धेन तत्सम्वन्धवत्वं विवक्षितम्। प्रकृते च स्वजनकस्थान-प्रयत्नजन्यत्वसम्बन्धमादाय समन्वयः। एवं तत्र तत्र सम्वन्ध ऊह्यः।

ननु कस्मिँश्चिल्लक्ष्ये चरितार्थस्य शास्त्रस्य कस्मिँश्चिल्लक्ष्ये प्रवृत्त्यभा-वायोद्देश्यतावच्छेदकव्यापकत्वं विधेये अवश्यमेव शास्त्रतात्पर्य्यविषयी-भूतमिति वक्तव्यं, तच्च न सम्भवति। निषेधविषये उद्देश्यतावच्छेदकस्य सत्त्वेऽपि विधेयाभावादतो निषेधशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्तत्वेन विधिशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचं कृत्वा संकुचितोद्देश्यतावच्छेदकव्यापकत्वञ्च विधेये इति न निषेधविषयमादाय व्याप्तिभंग इति स्थितौ नाज्झलाविति निषेधशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन तुल्यास्यप्रयत्नं सवर्णमितिशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नेऽपि संकोच आवश्यकः। स च न आज्झलत्वावच्छिन्नातिरिक्तत्वेन। तथा च आज्झल्भिन्नस्तुल्यास्यप्रयत्नो वर्णः सवर्ण इत्यर्थे सूत्रार्थाप्रसिद्धिः। सर्वस्य वर्णस्याज्झल्रूपत्वात्। न च आकाराजन्यतरभिन्नेन तुल्यास्यप्रयत्नमाकाराज्भिन्नं सवर्णं हल्भिन्नेन तुल्यास्यप्रयत्नं हल्भिन्नं सवर्णमित्येव निषेधविधिभ्यां मिलित्वा वोध्यत इति वाच्यम्, एकवाक्यताकरणेच्छया वाक्यद्वयसम्पादनस्यास्वारसिकत्वात्।

अत्रोच्यते-स्वविशिष्टो वर्णः स्वसवर्ण इति पर्य्यवसितार्थे स्ववृत्तिद्वित्ववत्त्वमप्येकं सम्बन्धं दत्त्वा तत्र द्वित्वे सम्बन्धघटके आकाराजन्यतरहल्वर्णोभयवृत्तिद्वित्वभिन्नत्वं निवेश्यते, ततश्चाकाराजन्यतरहल्वर्णोभयवृत्तिद्वित्वभिन्नं यत्स्ववृत्तिद्वित्वं तद्वत्त्वं षष्ठस्सम्बन्धः फलित इति नाज्झलोः सावर्ण्यप्रसंगः। न च द्वित्ववत्त्वसम्बन्धप्रवेशे स्वस्य स्वेन सावर्ण्यानापत्तिरिति वाच्यम्, इष्टापत्तेस्तत्र सावर्ण्यस्य फलाभावात्।

---

## ४. अणुदित्सवर्णस्य चाप्रत्ययः १।१।६९

**दीक्षितमते** अण् सवर्णान् गृह्णातीत्यर्थः। वर्णसमाम्नाये एव सूत्रं प्रवर्त्तते। इगादिपदानाञ्च स्ववाच्यवाच्ये लक्षणा। अस्य च्वावित्यादौ च स्वसदृशवाच्ये लक्षणा। **नवीनमते** च जातिपक्ष एवास्ति। अण्ग्रहणञ्च प्रत्याख्यातमेव। परन्तु **पाणिनिना** कोऽर्थोऽस्य स्वीकृतः स वक्तव्यः। न चाण् सवर्णान् गृह्णातीत्यर्थोऽस्य च्वावित्यत्रत्यस्याकारस्य व्यक्तिपक्षेऽणृत्वाभावेन सवर्णग्राहकत्वानुपपत्तेरिगादिपदेन दीर्घग्रहणानापत्तेश्च। न चाण्बोधकं पदं सवर्णान् गृह्णातीत्यर्थः। अस्य च्वावित्यादावस्येगादिपदस्य चाण्बोधकत्वेनादोषादिति वाच्यम्, अन्यसवर्णग्राहकत्ववारणाय स्वसवर्णान् गृह्णातीत्यर्थस्यावश्यकत्वेनेगादिपदसवर्णाप्रसिद्ध्या तस्य ग्राहकत्वानुपपत्तेः। अण्बोधकं पदं स्वबोध्यसवर्णेत्याद्यर्थे तु अशादिप्रत्याहारपदस्य स्वबोध्यजकारसवर्णचकारस्यापि ग्रहणापत्तेः। स्वबोध्याण्सवर्णानित्याद्यर्थे तु तद्दोषवारणेऽपि ह्रस्वपदस्य दीर्घवोधकत्वापत्ते-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तस्याप्यणबोधकत्वात्, अणमात्रबोधकं पदमित्यर्थेन ह्रस्वपदे न दोषस्तस्य वर्णसमाम्नायस्थाणबोधकत्वेऽपि लक्ष्यस्थानणबोधकत्वस्यापि सत्त्वेनातथात्वादित्यप्ययुक्तमेव । अशादिप्रत्याहारस्याप्यग्राहकत्वापत्तेस्तस्याप्यणमात्रबोधकत्वाभावात् ।

अत्रोच्यते—अणत्वविशिष्टधर्म्मवद्वर्णविशिष्टं यत्पदं तत्स्वबोध्याणसवर्णग्राहकम् । आद्यवैशिष्ट्यं स्वभिन्नत्व-स्वव्याप्यत्वोभयसम्बन्धेन । द्वितीयवैशिष्ट्यं स्वाद्यवयवकत्व-स्वाघटितवर्णद्वयारब्धसमुदायाघटित्वोभयसम्बन्धेन । अणवृत्तिर्वर्णत्वविशिष्टो धर्म्मोऽत्वादिस्तदाश्रयाद्यवयवकत्वं तद्भिन्नवर्णद्वयारब्धसमुदायाघटितत्वञ्चागादिप्रत्याहारे व्यपदेशिवद्भावेनाकरादौ च वर्त्तते ह्रस्वघिपदादौ च न वर्त्तत इति नाव्याप्त्यतिव्याप्ती ।

---

## ५. स्थानिवदादेशोऽनल्विधौ १।१।५६

स्थानपदार्थः अवच्छेदकतानिरूपितावच्छेदकतानिरूपितोच्चारणत्वाच्छिन्ना या साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नप्रकारतानिरूपिता विशेष्यता तदवच्छेदकधर्म्मावच्छिन्ना या साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नप्रकारतानिरूपिता विशेष्यता तदवच्छेदकतावच्छेदकतारूपः प्रथमावच्छेदकताश्रयः स्थानी चरमावच्छेदकताश्रय आदेशः, इको यणचीत्यादिना हि अजव्यवहितपूर्वत्वविशिष्टेक्कर्मकोच्चारणं साधु इदं ज्ञानं भ्रमः, अर्थात् साधुत्वप्रकारकभ्रत्माकज्ञानीयविशेष्यतावत्, अजव्यवहितपूर्वत्वविशिष्टयणकर्मकोच्चारणं साधु इदं ज्ञानं प्रमा, अर्थात् साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतावदिति बोध्यते । तथा च भ्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नप्रकारतानिरूपितोच्चारणत्वावच्छिन्नविशेष्यतावच्छेदकता कर्मत्वनिष्ठा तदवच्छेदकता इगनिष्ठा तदाश्रय इक् स्थानी साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नप्रकारतानिरूपितोच्चारणत्वावच्छिन्नविशेष्यतानिरूपितावच्छेदकता कर्म्मत्वनिष्ठा तन्निरूपितावच्छेदकता यणनिष्ठा तदाश्रयो यण् आदेशः । इकः स्थाने यण् स्यादित्यत्र स्थानपदार्थैकदेशावच्छेदकतायां षष्ठ्यर्थवृत्तित्वसम्बन्धेनेक्पदार्थस्यान्वयः । स्थानपदार्थचरमावच्छेदकतायाश्च स्वनिष्ठवृत्तित्वसम्बन्धावच्छिन्नाधारतानिरूपि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ताधेयतासम्बन्धेन यण्पदार्थेऽन्वयः। नन्वेवमिक्निष्ठस्थानितानिरूपितादेशतावान् गुण इति व्यवहारापत्तिः, गुणकर्म्मकमुच्चारणं साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतावदित्यर्थस्याद्गुण इत्यनेन वोधितत्वात्। यणि च तादृशव्यवहारप्रयोजकयावत्पदार्थस्य गुणेऽपि सत्त्वादिति चेन्न। उच्चारणत्वावच्छिन्नविशेष्यताया अग्रिमोच्चारणत्वावच्छिन्नविशेष्यतायां स्वावच्छेदकोच्चारणत्वावच्छिन्नत्व–स्वप्रयोजकशास्त्रप्रयोज्यत्वोभयसम्बन्धेनान्वयः। गुणकर्म्मकोच्चारणत्वावच्छिन्नविशेष्यतायाञ्च इक्कर्मकोच्चारणत्वावच्छिन्नविशेष्यताया द्वितीयसम्बन्धाभावात्।

ननु विकल्पस्थले जराया जरसन्यतरस्यामित्यादौ जराकर्म्मकोच्चारणेऽपि साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यताया एव सत्त्वेन जराशब्दस्य स्थानित्वानापत्तिरिति चेन्न। अवच्छेदकतानिरूपितावच्छेदकतानिरूपकविशेष्यताविशिष्टविशेष्यतावच्छेदकतावच्छेदकताया एव स्थानपदार्थत्वेनादोषात्। वैशिष्ट्यञ्च स्वावच्छेदकोच्चारणत्वावच्छिन्नत्व-स्वप्रयोजकशास्त्रप्रयोज्यत्व-स्वनिरूपितप्रकारताविशिष्टप्रकारतानिरूपितत्वसम्बन्धैः। प्रकारतावैशिष्ट्यञ्च प्रकारतायां स्वावच्छेदकं यत् साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतात्वं तद्घटकं यत् साधुत्वं तत्प्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नत्व-स्वावच्छेदकं यत्साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वं तदवच्छिन्नत्वैतदन्यतरसम्बन्धेन इको यणचीत्यादौ इक्कर्मकोच्चारणं साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतावत् यण्कर्म्मकोच्चारणं प्रमात्मकज्ञानीयविशेष्यतावदित्याद्येव शब्दनित्यतापक्षे वोध्यते। तथा च प्रथमज्ञानीयोच्चारणत्वावच्छिन्ना विशेष्यता इग्निष्ठावच्छेदकतानिरूपितकर्म्मत्वनिष्ठावच्छेदकतानिरूपिका। तद्वैशिष्ट्यं यण्कर्मकोच्चारणं साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतावदित्याकारकद्वितीयज्ञानीयोच्चारणत्वावच्छिन्नविशेष्यतायां यतो द्वयोरुच्चारणत्वावच्छिन्नत्वमस्ति एकशास्त्रप्रयोज्यत्वमप्यस्ति पूर्वविशेष्यतानिरूपितप्रकारतायाः स्वावच्छेदकं यत् साधुत्वप्रकारकभ्रमात्मकज्ञानीयविशेष्यतात्वं तद्घटकं साधुत्वं तत्प्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नत्वरूपान्यतरसम्बन्धेन विशिष्टा प्रकारता तन्निरूपितत्वञ्चास्तीति। जराया जरसन्यतरस्यामित्यनेन च जराकर्म्मकोच्चारणं साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतावत् जरस्कर्मकोच्चारणं साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतावदित्येव वोध्यते, जराजरसित्युभयोस्साधुत्वात्। तत्र प्रकारताया द्वितीयसम्बन्धरूपान्यतरसम्बन्धमादाय

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशिष्टा प्रकारतेति लक्षणसमन्वयः। न च जरानिष्ठस्थानितानिरूपिता-देशतावान् जरसिति व्यवहारवत् जरोनिष्ठस्थानितानिरूपितादेशतावान् जराशब्द इति व्यवहारापत्तिस्तादृशव्यवहारप्रयोजकस्योभयत्र समत्वा-दिति वाच्यम्, तद्विशिष्टत्वं तदादेशत्वमिति स्वीकारात्। वैशिष्ट्यञ्च स्वनिष्ठावच्छेदकतानिरूपितकर्मत्वनिष्ठावच्छेदकतानिरूपकविशेष्यताविशिष्टविशेष्यतावच्छेदकतावच्छेदकताश्रयत्व-स्वनिष्ठविषयताप्रयोजकषष्ठ्यन्तपदघटितशास्त्रघटकप्रथमान्तपदप्रयोज्यविषयताश्रयत्वैतदुभयसम्बन्धेन। विशेष्यतावैशिष्ट्यं विशेष्यतायां पूर्वोक्तसम्बन्धत्रयेणेति दिक्।

आगमस्थले च नागमिनोऽसाधुत्वं न वा आगममात्रस्य साधुत्वं बोध्यते'ऽनागमकानां सागमका आदेशा' इति भाष्यात्। तयोश्च तत्त्व-मिष्यत एवेति विभावनीयम्।

ननु आदेशः स्थानिवदिति सूत्रयितुमुचितम्। यच्छब्दयोगः प्राथम्य-मित्याद्युद्देश्यलक्षणमित्यभियुक्तोक्त्या उद्देश्यार्थस्य प्रथमं बुध्यारोहेण चोद्देश्यवाचकपदस्यैव प्राथम्यलाभादिति चेत्-सत्यम्। आचार्येण नियमेन तथाप्रयोगे पश्चादुपात्तस्य तस्यासाधुत्वमेव प्रतीयेदिति शङ्कया वैपरी-त्येन प्रयोगकरणम्। उद्देश्यस्य पश्चात्प्रयोगेऽपि साधुत्वमस्त्येव केवलं किञ्चिद् विलम्बेन तत्त्वप्रतीत्याऽनुचितत्वमात्रमिति भावः। ननु सुपदे-त्यादौ पदादेशो जरारूपस्थानिवत्स्यात्। ततश्च जरसापत्तिरिति चेन्न। सम्बन्धिशब्दत्वात्तदादेशस्तत्स्थानिवदित्यर्थलाभेनादोषात्। अनल्विधा-वित्यस्यालो विधिरल्विधिर्नाल्विधिरनल्विधिरिति विग्रहेणाल्सम्बन्धि-विधिभिन्ने विधावित्यर्थः। अल् च स्थान्यवयव एव गृह्यते। सम्बन्धश्च स्ववृत्तिधर्मावच्छिन्नोद्देश्यताकत्वरूपः। तथा चादेशः स्वस्थानिवृत्तिधर्मवान् भवति स्वस्थान्यवयवाल्वृत्तिधर्म्मावच्छिन्नोद्देश्यताकविधिभिन्ने विधावि-त्यर्थः। अलः स्थान्यवयवत्वेन विशेषणात् सुपि चेत्यस्य यञ्त्वावच्छि-न्नोद्देश्यताकविधित्वेऽपि तस्मिन् कर्त्तव्ये रामायेत्यादौ स्थानिवत्वसिद्धिः। यञ आदेशावयवत्वेन स्थान्यवयवत्वाभावात्। न चादेशो य इति तत्स्था-न्यवयवोऽलिकारस्तद्वृत्तिर्धर्म्मः सुप्त्वं तद्धर्मावच्छिन्नोद्देश्यताकत्वेन न सुपि चेति कर्त्तव्ये स्थानिवद्भावप्रसक्तिरिति वाच्यम्, अल्त्वव्याप्यत्वेन धर्म-स्य विशेषणात्, सुप्त्वस्य चाल्त्वव्याप्यत्वाभावात्। अत एवाग्रहीदित्यादौ स्थानिसम्बन्ध्यलिकारस्तद्वृत्तीट्त्वावच्छिन्नोद्देश्यताक इट इटीति कर्त्त-व्येऽपि दीर्घस्य स्थानिवत्त्वेनेट्त्वमिट्त्वस्याल्त्वव्याप्यत्वाभावात् व्याप्य-त्वनिवेशादेव 'औङः श्यां प्रतिषेधो वक्तव्य' इति वार्त्तिकं सङ्गच्छतेऽन्यथा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञाने इत्यादौ श्यादेशे स्थान्यलौकारवृत्तिस्वादित्वावच्छिन्नोद्देश्यताके यचि भमिति कर्त्तव्ये स्थानिवत्त्वानापत्त्या भत्वाभावेन यस्येतिलोपाप्राप्त्या वार्त्तिकस्य वैयर्थ्यापत्तिः सिद्धान्ते स्वादित्वस्याल्त्वव्याप्यत्वाभावेन न दोषः। न च वभूविवेत्यादौ वादेशस्य स्थान्यवयववकारवृत्त्यल्त्वव्याप्य-वल्त्वधर्मावच्छिन्नोद्देश्यताकार्धधातुकस्येड्वलादेरिति कर्त्तव्ये स्थानि-वत्त्वाप्रवृत्तेरार्धधातुकत्वाभावेनेटोऽभावापत्तिरिति वाच्यम्, स्वस्थान्यल्-वृत्तिरल्त्वव्याप्यो यो धर्मस्तद्घटितो यः स्वावृत्तिर्धर्मस्तदवच्छिन्नोद्देश्य-ताकेत्यस्य विवक्षणात्। प्रकृते तादृशं वलादित्वं न स्वावृत्तिरार्धधातुकत्वञ्च न तादृशमित्यदोषात्, स्वमादेशः घटितत्वमनतिदिष्टं ग्राह्यमिति तादृश-वल्त्वमादाय न दोषः। निरुक्तधर्म्मश्चैकपदप्रतिपाद्य एव गृह्यत इति तादृशवलाद्यार्धधातुकत्वमादायापि न दोष इत्यूहनीयम्। यत्तु स्वावृत्तित्व-मनिवेश्याल्त्वव्याप्यधर्म एव स्वावयवावृत्तित्वं निवेशितं, वल्त्वञ्च स्वावयववृत्त्येवेति न दोषः। न च बभूवतुरित्यादौ वलादित्वातिदेशाप-त्तिर्वल्त्वस्य स्थान्यवयवाल्वृत्तित्वाल्त्वव्याप्यत्वयोस्सत्त्वेऽप्यादेशावयवत-कारवृत्तित्वेन तद्धर्मावच्छिन्नोद्देश्यताकत्वेऽप्यार्धधातुकस्येड्वलादेरित्यस्य निषेधाप्रवृत्तेः। न च स्वाद्यवयवाल्वृत्तित्वनिवेशेन बभूवतुरित्यादौ स्वम-तुस्तदाद्यवयवोऽल्कारस्तदवृत्तित्वस्य वल्त्वे सत्त्वेन निषेधप्रवृत्त्या बभूवि-वेत्यादौ स्वं वादेशस्तदाद्यवयवोऽल् वकारस्तद्वृत्तित्वस्यैव वल्त्वे सत्त्वेन निषेधाप्रवृत्त्या नातिव्याप्त्यव्याप्ती इति वाच्यम्। अस्तेः क्विपि अस्तेर्भू-रित्यनेन भ्वादेशे भूरित्यादौ हल्त्वस्यादेशाद्यवयवाल्भकारस्तद्वृत्तित्वेन निषेधाप्रवृत्त्या स्थानिवत्त्वेन हलन्तत्वात्सुलोपापत्तेः। मम तु स्वस्थान्य-वयवाल्वृत्त्यल्त्वव्याप्यो धर्मो हल्त्वं तद्घटितं हलन्तत्वं तच्च स्वमादेशो भूरिति तदवृत्तिरपीति निषेधप्रवृत्त्या दोषाभावः। वस्तुतः स्वस्थान्यवय-वाल्वृत्तित्वनिवेशस्य न फलमादेशावृत्तित्वस्याल्त्वव्याप्यधर्मघटितधर्मे निवेशेनैव सर्वानिष्टपरिहारादिति **प्राचीनमतविचारः।**

**नवीनास्तु** आदेशः स्वस्थानिवत् स्वविशिष्टविधौ न। वैशिष्ट्यञ्च स्वावृत्तिर्योऽल्त्वव्याप्यधर्मघटितैकपदप्रतिपाद्यो धर्मस्तद्धर्मावच्छिन्नो-द्देश्यताकत्व-स्वनिरूपिताऽल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकर-णधर्म्मावच्छिन्नोद्देश्यताकत्वैतदन्यतरसम्बन्धेनेति वदन्ति। प्रथमसम्ब-न्धस्य फलन्तु पूर्वोक्तमेव। द्वितीयस्य फलं धिन्वन्तीति। धिवेर्भि प्रत्यये तुमि झकारस्यान्तादेशे मध्ये धिन्विकृण्व्योरच्चेत्युप्रत्यये वकारस्याकारादेशे तस्य लोपे उकारस्य यणि धिन्वन्तीतिरूपम्। तत्रोप्रत्ययगतमार्धधातुकत्वं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थानिवद्भावेन वकारादेशे आदाय प्राप्त इडागमो न तस्य स्थानिभूतोऽल् उकारस्तद्वृत्त्यार्धधातुकत्वावच्छिन्नोद्देश्यताकत्वेनानल्विधाविति निषेधात्। पूर्वसम्बन्धेन तु न सिद्धिरार्धधातुकत्वस्याल्त्वव्याप्यधर्मघटितत्वाभावात्। न चापरनिमित्तकत्वेनान्तरङ्गे इटि परनिमित्तकस्य यणोऽसिद्धत्वान्नेडागम इति वाच्यम्, अपूर्वनिमित्तकत्वे सत्यपरनिमित्तकत्वमन्तरङ्गत्वमिति स्वीकारेणेडागमस्य धातोः परस्य वलादेरार्धधातुकस्येडित्यर्थकेनार्धधातुकस्येड्वलादेरित्यनेन विहितस्य पूर्वनिमित्तकत्वेनान्तरङ्गत्वाभावात्। धातोः परस्येत्यर्थाभावे तु प्रत्ययग्रहणे चापञ्चम्या इत्यस्याप्राप्त्याऽऽर्धधातुकपदस्य प्रत्ययबोधकत्वेन तदादितदन्तोपस्थितौ भवितेत्यादौ धातोः पूर्वमिडापत्तेः। अपरनिमित्तकत्वमात्रन्तु न तथा। नामीतिसूत्रे आमीति न्यासे रामाणामित्यादौ नित्यत्वान्नुटः पूर्वं दीर्घे नुटोऽप्राप्त्या ह्रस्वग्रहणवैयर्थ्योपपादनपरभाष्यासङ्गत्यापत्तेः। अपरनिमित्तकत्वेन नुटोऽन्तरङ्गत्वात्। नित्यापेक्षयाऽन्तरङ्गस्य बलवत्त्वेन नुट एव पूर्वं प्रवृत्तेः अपूर्वनिमित्तकत्वे सतीत्युक्तौ तु न दोषः। उक्तभाष्यादपरनिमित्तकादेशत्वमन्तरङ्गत्वमिति स्वीकाराच्च नात्रेटोऽन्तरङ्गत्वम्। भविष्यतीत्यादौ परनिमित्तकस्य स्यादेरसिद्धत्वेनेटोऽप्राप्त्या भविष्यति गम्यादय इत्यादिनिर्देशासङ्गत्यापत्त्येडागमेऽन्तरङ्गपरिभाषाया अप्रवृत्तिकल्पनाच्च। न च नात्रेटः प्रवृत्तिः पञ्चमीसमासेनाचः परस्मिन्नित्यनेन स्थानिभूतोऽजुकारस्ततः पूर्वो नकारस्ततः परस्येडागमे कर्त्तव्ये परनिमित्तकस्य यणादेशस्य स्थानिवद्भावेन वलादित्वाभावादिति न फलमेतदिति वाच्यम्। पञ्चमीसमासस्यानित्यत्वात्। न चानित्यस्यापीष्टस्थले प्रवृत्तेरेवाभ्युपगमोऽन्यथा तस्य वैयर्थ्यापत्तिरिति वाच्यम्, पञ्चमीसमासेऽपि स्वविधावप्रवृत्तेरवश्यमभ्युपगमादन्यथा भवतीत्यादावपि गुणस्य स्थानिवद्भावापत्त्याऽवादेशानापत्तेः। भवतेर इत्यादिनिर्देशासङ्गत्यापत्तेश्च। न चानित्यत्वाद्भवतीत्यादावप्रवृत्तिस्तस्या एवेष्टत्वात्, धिन्वन्तीत्यादौ च प्रवृत्तिरेव तयैवेष्टसिद्धेरिति वाच्यम्। भवतीत्यत्र न लवनमित्यत्र न भवनमित्यत्र न स्तवनमित्यत्र नेत्याद्यनन्तवचनकल्पनरूपाननुगतानित्यत्वकल्पनापेक्षया लाघवात्। स्वविधौ न स्थानिवदित्यनुगतानित्यत्वकल्पनाया एव न्याय्यतया धिन्वन्तीत्यत्र स्थानिवत्वाप्राप्तेः। भाष्योक्तेनाचः परस्मिन्नपरविधाविति न्यासेनात्र स्थानिवद्भावः स्यादित्यपि न। आयन् आसन्नित्यस्यासिद्धवदत्राभादिति सूत्रसिद्धस्योदाहरणस्य दानेन भवतीत्यादिलक्ष्यानुरोधेन च तन्न्यासस्यैकदेश्युक्तत्वेन सिद्धान्तिभाष्यासम्मतत्वात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्तु भवतीति द्वितीयार्थस्य फलं तत्र हि लट्प्रत्ययगतमार्धधातुकत्वं स्थानिवद्भावेनादाय प्राप्तस्येटः प्रकारान्तरेण वारणासम्भवः। स्वीकृते तु द्वितीयार्थेऽल्त्वव्याप्यं लत्वन्तद्धर्म्मावच्छिन्नस्थानितासमानाधिकरणमार्धधातुकत्वन्तद्धर्मावच्छिन्नोद्देश्यताकत्वेनानल्विधाविति निषेधान्नेट्। आद्यार्थे तु न निषेधप्रवृत्तिरार्धधातुकत्वस्याल्त्वव्याप्यत्वाभावादिति तन्न। लिट् चेत्यनेन लिडादेशस्यार्धधातुकसंज्ञाविधानसामर्थ्याल्लकारगतार्धधातुकत्वातिदेशो नेत्यर्थकल्पनयाऽपि दोषाभावात्, धातोरित्यस्य सम्बन्धाद्धातोः परत्वाभावाच्च न दोष इति तु न युक्तम्। अदादौ शपो लुकि दोषसम्भवात् द्वितीयार्थे प्रमाणन्तु भोभगोअघोरिति सूत्रस्थं भाष्यम्। तत्र हि अशग्रहणस्य फलं छन्दस्सु पयस्सु इति सप्तमीवहुवचने दत्त्वोक्तम्। किमिति प्रथमैकवचने दोषो नोक्तः वृक्षस्तत्र प्लक्षस्तत्र इत्यादावित्याशङ्क्यानल्विधाविति निषेधस्तत्र भविष्यतीति समाहितम्।

अयं भावः—वृक्षस्तत्रेत्यत्र यत्वस्यासिद्धत्वाद्रेफस्य विसर्गे तस्य स्थानिवद्भावेनैव रुत्वमानेयम्। तच्च न सम्भवति। रुत्वस्य विसर्गीयाल्त्वव्याप्यरत्वावच्छिन्नस्थानितासामानाधिकरण्यात्तद्धर्म्मावच्छिन्नोद्देश्यताकत्वाद्यत्वस्येत्यनल्विधाविति निषेधासम्भवात्। सप्तमीवहुवचने तु रोः सुपीति शास्त्रीयविसर्गस्थानिता रुत्वावच्छिन्ना। रुत्वञ्च नाल्त्वव्याप्यमिति निषेधाभावात्, स्थानिवत्त्वाद्रुत्वं स्यादिति विशेष इति।

**प्राचीनमते** तु न निषेधप्राप्तिस्तत्रापि अतिदेष्टव्यस्य रुत्वस्याल्त्वव्याप्यधर्मघटितत्वाभावात्। न च रोः सुपीत्यस्य नियमार्थतया खरवसानयोरित्यनेनैव। तत्रापि विसर्गेण साम्यमेवेति न विशेषोपपादनं युक्तं तव मतेऽपीति वाच्यम्। **नागेशमते** नियमशास्त्राणां विधिमुखेनैव प्रवृत्तेः रोस्सुपीत्यनेनैव तत्र विसर्गस्य सत्त्वात्। रोः सुपीत्यत्रापि रेफमनुवर्त्य रोरेफस्य विसर्ग इत्यर्थेनात्राप्यनल्विधावित्यस्य प्रवृत्त्या साम्यमेवेति चेत्तर्ह्युत्तरार्थमेवाशग्रहणमित्यन्यदेतत्। न च ऋधातोर्द्वित्वे ऋऋ इति स्थिते अभ्यासस्योरदत्वे रपरत्वे च अर् ऋ इति दशायां अरित्यस्याभ्यासत्वाभावाद्धलादिः शेषो न स्यात्। न च स्थानिवद्भावेनाभ्यासत्वम्।

**प्राचीनमते** निषेधाप्रवृत्तावपि **नवीनमते** ऋत्वस्याल्त्वव्याप्यत्वात्तद्धर्म्मावच्छिन्नस्थानितासामानाधिकरण्यादभ्यासत्वस्यानल्विधाविति निषेधात्। न च पुनरभ्याससंज्ञेति **शेखरोक्तं** युक्तं स्वीयविधेयताश्रयावधिकपूर्वत्व-स्वीयोद्देश्यताश्रयत्वोभयसंवन्धेन द्वित्वशास्त्रविशिष्टस्याभ्याससंज्ञेत्यर्थकपूर्वोभ्यास इत्यस्याप्रवृत्तेः। अरित्यस्योद्देश्यत्वाभावा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तृ। न चैकदेशविकृतन्यायेनाभ्यासत्वमर्धाधिकविकारस्य सत्त्वेन न्यायस्य प्रवृत्त्यभावादत एव न तन्न्यायेनोद्देश्यतामादाय पुनरभ्याससंज्ञा। न च द्वित्वशास्त्रविशिष्टस्याभ्याससंज्ञेत्यर्थः। वैशिष्ट्यञ्च स्वीयोद्देश्यताश्रयघटितत्व-स्वीयविधेयताश्रयघटितत्वस्वविशिष्टाघटितत्वैतत्त्रितयसंवन्धेन। तत्र वैशिष्ट्यं स्वीयोद्देश्यताश्रयेतरत्व-स्वीयविधेयताश्रयेतरत्वोभयसंवन्धेन। अग्रिमवैशिष्ट्यं स्वारम्भकत्वस्वारम्भकपूर्वत्वोभयसंवन्धेन। ऋ ऋ इति समुदायः द्वित्वशास्त्रविशिष्टस्तत्र हि स्वं द्वित्वशास्त्रं तदीयोद्देश्यताश्रयविधेयताश्रयौ पूर्वोत्तरभागौ ताभ्यां घटितत्वमस्ति ताभ्यामितर उदासीनस्तद्घटितत्वमप्यस्ति तद्विशिष्टश्च पूर्वोभागस्तस्य हि तत्समुदायारम्भकत्वं तत्समुदायारम्भकोत्तरभागपूर्वत्वञ्चास्ति तस्याभ्याससंज्ञा। अर ऋ इति समुदाये च ऋ ऋ समुदायगतं द्वित्वशास्त्रविशिष्टत्वमेकदेशविकृतन्यायेनानीयते। तद्वैशिष्ट्यं च स्वत एवास्तीति जायत एवारित्यस्याभ्याससंज्ञा। ऋऋसमुदायैकदेशाज्भागस्याकाररूपविकारसत्त्वेनार्धान्यूनस्यैव विकृतत्वेन न्यायप्रवृत्तेरविवादादिति वाच्यम्, उद्देश्यताश्रयस्यैव ऋ इत्यस्य विकृतत्वेनोद्देश्यताश्रयरूपविकृतावयवनिवन्धनस्य द्वित्वशास्त्रवैशिष्ट्यस्य छिन्नपुच्छे शुनि पुच्छवत्त्वस्येवातिदेष्टुमशक्यत्वात्।

अत्रोच्यते—द्वित्वशास्त्रविशिष्टस्याभ्याससंज्ञेत्यर्थो वैशिष्ट्यं च स्वीयविधेयताश्रयावधिकपूर्वत्व-स्वीयोद्देश्यताश्रयसमभिव्याहृतवर्णाघटितत्वोभयसंवन्धेन। अरित्यत्र प्रथमसंवन्धस्त्वस्त्येव द्वितीयोऽप्यस्ति। यत उद्देश्यताश्रय ऋ इति तत्समभिव्याहृतत्वं तदुत्तरभागतस्याकारस्य रेफस्य वा नास्त्यपि त्वन्यस्यैव तदघटितत्वमरित्यस्येति न्यायसूत्राभ्यां विनैवाभ्याससंज्ञोपपत्तिः। न चोरदत्वोत्तरमुपसर्गसम्वन्धेऽकारादेरिवोपसर्गस्याप्युद्देश्यताश्रयसमभिव्याहृतत्वाभावात्तद्घटितस्याप्यभ्याससंज्ञापत्तिरिति वाच्यम्, उद्देश्यताश्रयसमभिव्याहृतत्वयोग्याघटितत्वनिवेशेनादोषात्, उपसर्गस्य तद्योग्यता सत्त्वात्, स्वीयोद्देश्यताविशिष्टसमभिव्याहृतवर्णाघटितत्वसंवन्धनिवेशेनादोषाद्वा। तत्र वैशिष्ट्यं स्वाश्रयत्वस्वाश्रयस्थानिकत्वैतदन्यतरसंवन्धेनारित्यत्र द्वितीयसंवन्धसत्त्वेनादोषात्। वस्तुतस्तु अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मेण साक्षादवच्छिन्नोद्देश्यताककार्य एव निषेधस्वीकारेण हलादिःशेष एतदीयोद्देश्यताया अभ्यासत्वेन साक्षादवच्छिन्नत्वाभावेन स्थानिवद्भावप्रवृत्तिरव्याहतैवेति दिक्। साक्षान्निवेशादेव कुम्भकारेभ्य इत्यत्र सन्निपातपरिभाषयाऽव्ययसंज्ञाऽभावोपपादनपरभाष्यासङ्गतिरपि न अन्यथैत्वीया याऽत्वरूपाल्त्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्याप्यधर्म्मावच्छिन्ना स्थानिता तत्समानाधिकरणं क्त्वन्तद्धर्मावच्छिन्नोद्देश्यताकत्वेन क्त्न्मेजन्त इति कर्त्तव्ये स्थानिवत्वाप्रवृत्तेरेकारे क्त्वाभावेन संज्ञाया अप्राप्त्या सन्निपातपरिभाषया तद्वारणपरभाष्यासङ्गतिस्स्यात् । तन्निवेशे तु अव्ययसंज्ञीयोद्देश्यतायाः क्त्त्वेन साक्षादवच्छिन्नत्वाभावेनादोषः, उद्देश्यतायाः षष्ठ्यन्तपदप्रयोज्याया एव ग्रहणेनादोषाच्च, अव्ययसंज्ञीयोद्देश्यतायास्तथात्वाभावात् । अत एव लोम्नी इम इत्यादावदोषोऽन्यथा स्थानिवद्भावेन स्वादित्वन्न स्यादलूत्वव्याप्यमौङ्त्वन्तद्धर्म्मावच्छिन्नस्थानिता नपुंसकाच्चेति शास्त्रीया तत्समानाधिकरणो धर्म्मः स्वादित्वन्तदवच्छिन्नोद्देश्यताके भत्वे कर्त्तव्येऽनल्विधाविति निषेधापत्तेस्ततश्च भत्वाभावेऽल्लोपो न स्यात् । साक्षान्निवेशे तु भसंज्ञीयोद्देश्यतायाः स्वादित्वेन साक्षादवच्छिन्नत्वाभावादनल्विधाविति निषेधाप्रवृत्तिरुद्देश्यतायाः षष्ठ्यन्तपदप्रयोज्यत्वाभावाच्च । तत्रैव स्थानिवत्त्वेन द्विवचनत्वमादाय प्रगृह्यत्वात् प्रकृतिवद्भावः प्रगृह्यसंज्ञीयोद्देश्यताया द्विवचनत्वेन साक्षादवच्छिन्नत्वेऽपि षष्ठ्यन्तपदप्रयोज्यत्वाभावादनल्विधाविति निषेधो न। न चाग्रहीदित्यादौ दीर्घविधावचश्चेत्यस्योपस्थित्या दीर्घीयस्थानिताऽलूत्वव्याप्यमच्त्वन्तदवच्छिन्ना तत्समानाधिकरणमिट्त्वन्तदवच्छिन्नोद्देश्यताक इट ईटीति दीर्घे कर्त्तव्ये स्थानिवद्भावेन दीर्घादेशे इट्त्वाभावात्सलोपो न स्यादिति वाच्यम्, अचोञ्णितीत्यत्रेक्परिभाषोपस्थिताविकरूपस्यैवाचो वृद्धावज्ग्रहणवैयर्थ्येन निर्दिष्टस्थानिके पदोपस्थापकपरिभाषाया अप्रवृत्तिकल्पनेनादोषात्, इट ईटीति सलोपीयोद्देश्यताया इट्त्वेन साक्षादवच्छिन्नत्वाभावाच्च। एतेनेक्परिभाषाऽत्र न प्रवर्त्तत इति विशेषज्ञापनेऽपि न दोषः ।

नन्वतिखट्व इत्यादौ स्थानिवद्भावेनाप्त्वमादाय प्राप्तसुलोपवारणाय सूत्रकृतो दीर्घग्रहणं ङ्याब्ग्रहणेऽदीर्घ इति वार्त्तिकं ङ्याबुद्देश्यककार्ये कर्त्तव्ये दीर्घभिन्न आदेशो न स्थानिवदित्यर्थकं तत्प्रत्याख्यानायाऽऽकारप्रश्लेषपरभाष्यं चासङ्गतं ह्रस्वविधावचश्चेत्यस्योपस्थित्या ह्रस्वीयस्थानिताऽलूत्वव्याप्याच्त्वावच्छिन्ना तत्समानाधिकरणाप्त्वावच्छिन्नोद्देश्यताके हल्ङ्याविति सुलोपे स्थानिवद्भावाप्रवृत्तेरिति चेन्न । आप्त्वेन साक्षादवच्छिन्नत्वस्य सुलोपीयोद्देश्यताया अभावेन निषेधाप्रवृत्तेः । अथ अततक्षदित्यत्र तक्षेर्ण्यन्तात्लुङि चङि इयङ्णिलोपयोः प्राप्तौ परत्वादियङि ततो णिलोपेनान्त्यलोपः प्रसज्येदतः पूर्वविप्रतिषेधेन णिलोप इति भाष्यासङ्गतिरियङ्स्थानिवत्वेन णित्वासिद्धेरनल्विधाविति निषेधात् इयङीयस्थानि-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्वावच्छिन्ना तत्समानाधिकरणं णित्वन्तेन साक्षादवच्छिन्नत्वाणिण-लोपीयोद्देश्यतायाः न च तद्धीत्यस्य स्थाने तद्धिय् इत्यादेश इत्यानुमानिक-स्थान्यादेशभावकल्पनात् स्थानिवद्भावेन तद्धिगतं ण्यन्तत्वं तद्धिय् इत्यत्रानीय ण्यन्ताङ्गस्य लोप इत्यर्थकणेरनिटीतिसूत्रेणालोऽन्त्यपरिभाषया यलोपः प्राप्त इति वाच्यम्। निर्दिश्यमानपरिभाषया ण्यन्ताङ्गावयवस्य णिपदीयनिर्दिश्यमानस्य लोप इत्यर्थेनेय् इत्यत्र णित्वमन्तरा णिपदीयनि-र्दिश्यमानत्वाभावेन लोपाप्राप्तेः। षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितीयवि-षयताश्रयत्वं हि निर्दिश्यमानत्वम्। तच्च णित्वमन्तरा न सम्भवति। तच्च इयुशब्दे स्थानिवद्भावं विना न सम्भवतीति चेन्न। स्वजन्योपस्थितीय-विषताश्रयत्वस्वजन्योपस्थितीयविषयताश्रयस्थानिकत्वैतदन्यतरसम्बन्धेन षष्ठीप्रकृतिविशिष्टत्वं निर्दिश्यमानत्वमिति स्थानिवद्भावं विनैव द्वितीय-सम्बन्धसद्भावेनादोषादित्यलम्॥

---

## ६. अचः परस्मिन् पूर्वविधौ १।१।५७

पूर्वसूत्रादादेशपदानुवृत्तिः। आदेशत्वञ्च विधेयताविशेषाश्रयत्वम्। तद्विधेयतया आकाङ्क्षितं स्थानित्वमच्पदोत्तरषष्ठ्या अर्थः। स्वसमभि-व्याहृतपदार्थो यदर्थे साकाङ्क्षस्तद्वाचकत्वं षष्ठ्या इति नियमात्। एतेन गुणानाञ्च परार्थत्वादसम्बन्धस्समत्वात्स्यादिति न्यायात् षष्ठीस्थान इत्य-स्याप्रवृत्तेः स्थानार्थकत्वं षष्ठ्या अनुपपन्नमित्यपास्तम्, परिभाषां विनैव स्थानार्थकत्वलाभात्। स्थानित्वे च वृत्तित्वसम्बन्धेनाच्पदार्थस्यान्वयस्त-स्मिन्नेव स्थानित्वेऽच्त्वस्य धर्म्मिपारतन्त्र्येण स्वप्रतियोगिकपर्य्याप्त्यनुयो-गितावच्छेदकीभूतधर्म्मावच्छिन्नानुयोगितानिरूपकपर्य्याप्तिप्रतियोगि-त्वसम्बन्धेनान्वयः। स्थानितायाश्च निरूपकत्वसम्बन्धेनादेशपदार्थेऽन्व-यः। परस्मिन्निति यस्य च भावेनेति सत्सप्तमी तस्या ज्ञाप्यत्वमर्थस्तत्त्व-ञ्च ज्ञानजन्यज्ञानविषयत्वम्। तस्य च स्वरूपसम्बन्धेनादेशपदार्थेऽन्वय-स्तावतैव परनिमित्तकत्वमादेशे लब्धम्। स्थानिवदित्यस्य च स्थानिप्रति-योगिकसादृश्यवानित्यर्थः। स चाभेदेनादेशपदार्थान्वयी। तथा च अज्नि-ष्ठा याऽच्त्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकीभूतधर्म्मावच्छिन्ना-नुयोगिताकपर्य्याप्तिप्रतियोगिभूता स्थानिता तन्निरूपको यः परसत्ता-विषयकज्ञानजन्यज्ञानविषय आदेशस्स स्वस्थानिसदृशो भवतीत्यर्थः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सादृश्यञ्च कार्य्यवत्त्वतदभावान्यतररूपेण बोध्यम् । अच्त्वस्यान्वयवलादेवाच एवादेशोऽजादेश इति शेखरे उक्तम् । मरुतमाचष्टे मारयतीत्यादौ हि णिज्निमित्तको यष्ठिलोपस्तदीयस्थानिताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकमुच्छब्दगतं द्वित्वमच्त्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकमकारनिष्ठमेकत्वमतो न तत्स्थानितामादाय स्थानिवद्भावप्रवृत्त्या वृद्ध्यभावप्रसंगोऽन्यथा मातृपितृजातस्य मातृजातत्वादिवदज्झलादेशस्याप्यस्याजादेशत्वात्स्थानिवद्भावापत्तिः । यत्तु अच्त्वस्य निरुक्तसम्बन्धेनान्वये स्नायते श्रायसावित्यादौ दीर्घवृद्धिरूपैकादेशयोः स्थानिवद्भावेनाद्ये उपसर्गस्यायतिपरत्वे नोपसर्गस्यायताविति लत्वमन्त्यसान्तस्योगिदन्तस्याण्सम्बन्ध्यकारेण व्यवधानात्, सर्वनामस्थानपरत्वाभावेन नुमोऽभावश्च भवति तत्रैकादेशस्थानिताया अज्द्वयपर्य्याप्तत्वेन तत्राच्त्वस्य निरुक्तसम्बन्धाभावात्, स्थानिवद्भावाप्रसक्तिरच्त्वस्य प्रत्येकपर्य्याप्तत्वादिति तन्न । सजातीयानेकवर्णघटितसमुदाये वर्णत्वव्याप्यधर्म्मपर्य्याप्तिरारोप्यत इत्यर्थकेन वर्णग्रहणे जातिग्रहणमित्यनेन अअ इति समुदाये अऔ इति समुदाये च स्थानिभूते अच्त्वपर्य्याप्तेरारोपेण स्थानितायामच्त्वस्य निरुक्तसम्बन्धोपपत्त्या दोषाभावात् । अब्भक्षन्यायेनाप्यच एवादेश इत्यर्थलाभः । अतो लोप इति सूत्रे अय् पय् धातोः क्विपि यलोपे ह्रस्वस्येति तुकि, अत्पदित्यादौ तुकं बाधित्वाऽतो लोपवारणाय भाष्यकृतकृतस्योपदेशग्रहणानुवर्त्तनस्य वैयर्थ्यम् । यदि हलादेशोऽपि स्थानिवत् स्यात्तदाऽत्पदित्यादौ यलोपस्य स्थानिवद्भावेनैव लोपवारणसम्भवादिति तदेव हलादेशो न स्थानिवदित्यर्थज्ञापकं स्यादित्यागल्येत्यादौ दोषाभावेनाज्ग्रहणमज्मात्रस्थानिकादेशलाभार्थमिति केचित्—तन्न । शोधातोः क्तप्रत्यये आत्वे शातस्योच्छब्देन समासे शातोत् तमाचष्टे णिचि लुङि टिलोपचङ्द्वित्वेषु णौ चङीति ह्रस्वेऽशीशतदिति भवति । तत्र ह्रस्वनिष्पन्नाकारस्य क्तप्रत्यये लोपवारणायोपदेशग्रहणस्य चारितार्थ्यात् । न च बहिरङ्गत्वेनासिद्धत्वं, नाजानन्तर्य्य इति निषेधात् । यदि च गोऽभवदित्यादावोदिति प्रगृह्यत्ववारणायौदित्यत्र प्रतिपदोक्तपरिभाषाश्रयणपरभाष्यप्रामाण्याद्वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्त्तत इत्युच्यते तदा तयैवात्रापि लोपवारणसम्भवेनोपदेशग्रहणस्य वैयर्थ्येनाप्युक्तार्थलाभः । हन्धातोः क्विबन्ताद्भ्यामि हभ्यामित्यादावनैमित्तिकनलोपे क्विब्निमित्तकाल्लोपवारणायोपदेशग्रहणस्य चारितार्थ्यम् । न लोपः सुबितिसूत्रे कृतितुग्ग्रहणवैयर्थ्यापत्त्याऽल्लोपाभावस्तु न युक्तः । जुन्धातोः क्विपि जुभ्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मित्यादौ तुगभावाय चारितार्थ्यसम्भवात् नोपदेशग्रहणं ज्ञापकमिति केचित्—तन्न। परनिमित्त इत्यस्य परस्मिन् सत्येव य आदेश इत्यर्थस्यैव सिद्धान्तितत्वेन हुभ्यामित्यत्रापि नलोपस्य परनिमित्तकत्वात् स्थानिवत्त्वेनैव लोपवारणसम्भवात् जुन्धातोः कस्यचित्सम्मतत्वेऽपि सर्वसम्मतत्वाभावेन कृतितुग्ग्रहणसामर्थ्येनापि लोपवारणसम्भवेनोपदेशग्रहणस्योक्तार्थज्ञापकत्वसम्भवात्, भवितेत्यादावासो लोपादेरपि स्थानिवद्भावेनेटो गुणाप्राप्त्या दीधीवेवीटामितिसूत्रस्थेड्ग्रहणसामर्थ्याद्धलादेशो न स्थानिवदिति ज्ञाप्यत इति तु न युक्तम्। आतिषमित्यादाविटो गुणाभावाय चारितार्थ्यसम्भवेन ज्ञापकत्वासम्भवात्। न च यातेर्यङन्ताद्वरचि अतो लोपे यलोपे यायावर इत्यत्र स्थानिवद्भावेनाकारमादायातो लोप इटि चेत्यनेनातो लोपे कर्त्तव्ये वरे लोपो न स्थानिवदित्यर्थेन नपदान्तसूत्रेण निषेधादातो लोपो न भवति। हलादेशस्यापि स्थानिवद्भावेन यलोपस्यापि स्थानिवद्भावेन तेन व्यवधानादातो लोपाभावे सिद्धे वरे ग्रहणं व्यर्थं सद्धलादेशो न स्थानिवदित्यर्थज्ञापकं स्यादिति वाच्यम्। पिस् धातोरिगुपधलक्षणे के तदन्तादाचारक्विबन्तात्कर्त्तरि क्विपि अतो लोपे आचारक्विबन्तात् स्थेशभासेतिसूत्रेण वरचि लघूपधगुणप्रतिबन्धार्थं प्राप्तस्याल्लोपस्थानिवद्भावस्य निषेधाय वरज्निमित्तकविधौ लोपो न स्थानिवदित्यर्थं बोधयतो वरे ग्रहणस्य चारितार्थ्यसम्भवात्। यदि च हलन्तेभ्य आचारक्विपोऽनभिधानं ह्रस्वनद्याप इतिसूत्रभाष्यान्मन्यते तदोक्तप्रयोगासम्भवादचरितार्थं सज्ज्ञापकमेवेति चेदत्रोच्यते—यातेर्य्यङन्ताद्विचि अलोपयलोपयोर्यङवयवातो लोपस्य स्थानिवद्भावेप्यातो लोप इटि चेत्यस्येदानीं यलोपस्यापि स्थानिवद्भावेनाप्रवृत्तौ नपुंसकह्रस्वत्वे यायशब्दादाचारक्विबन्ताद्यश्च यङ् इति वरचि तन्निमित्तकाल्लोपे कर्त्तव्ये यङवयवाकारलोपस्थानिवद्भावप्रतिषेधार्थमेव वरे ग्रहणमस्तु। न च तत्र ह्रस्वनिष्पन्नाकारस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावादेव स्थानिवद्भावाप्राप्तौ न तदर्थं वरे ग्रहणमिति वाच्यम्, तादृशयायशब्दस्य यशब्देन समासे याययशब्दादाचारक्विबन्तात् कर्त्तरि क्विप्यल्लोपयलोपयोराचारक्विबन्ताद्वरचि तन्निमित्तकाल्लोपे कर्त्तव्ये यशब्दावयवाकारलोपस्थानिवद्भावप्रतिषेधाय चारितार्थ्यात्। विश्न इत्यत्र सतुक्च्छस्थानिकशादेशस्य स्थानिवद्भावेन लघूपधत्वाभावेन गुणाप्राप्तेर्नङो ङित्त्वं व्यर्थं सद्धलादेशो न स्थानिवदित्यत्र ज्ञापकमिति तु न वाच्यम्, विश्नशब्दादाचारक्विबन्तात् लट आत्मनेपदार्थं ङित्वस्यावश्यकत्वात्। न च केदाराद्यञ्चेत्यतो यञोऽनुवृत्त्यैव सिद्धे ब्राह्म-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णमाडववाडवेति सूत्रस्थयन्ग्रहणमन्यतोऽपि विधानार्थं तेन पृष्ठादुपसंख्यानमिति लब्धमितिभाष्य उक्तन्तदसंगतं स्याद्यन्नन्तब्राह्मण्यशब्दादाचारक्विवन्ताल्लटः परस्मैपदं यन्नन्ताच्च तस्मात् स्वरितञित इत्यात्मनेपदमिति फलभेदादतः प्रातिपदिकगतेत्पदघटितधर्म्मनिमित्तककार्य्यं तत्प्रकृतिकाचारक्विवन्तप्रकृतिकलटो न भवतीति ज्ञापनात् नात्मनेपदार्थं ङित्वमिति वाच्यम्। यन्नन्तादाचारक्विपोऽभावकल्पनेनापि फलभेदवारणसम्भवात्, तादृशञित्वप्रयुक्तात्मनेपदस्यैवाभावकल्पनाच्च। यजतेः क्विपि सम्प्रसारणे आचारक्विवन्ताल्लङि गुणाभावाय तस्य चारितार्थ्याच्च। युष्माकमित्यादावन्त्यलोपपक्षे भाविसुटो निवृत्तये कृतस्य साम आकमित्यत्र ससुट्कनिर्देशस्य पञ्चमीसमासमाश्रित्य दलोपस्य स्थानिवद्भावेन सुटो वारणसम्भवाद्धलादेशस्थानिवत्त्वज्ञापकत्वमित्यप्ययुक्तम्, अवश्याश्रयणीयपञ्चमीसमासानित्यत्वज्ञापनेनापि तस्य सार्थक्यसम्भवात्। धिनोतीत्यत्र प्रक्रियालाघवार्थं वस्य लोपविधानेनापि वलोपस्य स्थानिवद्भावेन गुणाभावोपपत्त्या धिन्विकृण्व्योरितिसूत्रेणाकारविधानं हलादेशस्थानिवत्त्वज्ञापकम्। न च धिनोति पचेति सततं यत्राभिधीयते सा धिनोतिपचा तत्सम्बोधने धिनोतिपचे इत्यत्र वलोपस्य स्थानिवद्भावेन नकारवकारात्मकसंयोगे परे गुरुसंज्ञायां धीकारस्य गुरोरिति प्लुतस्स्याद्लोपे तु नेति फलभेद इति वाच्यम्, संयोगसंज्ञायाः पूर्वपरोभयसम्बन्धित्वेन पूर्वमात्रोद्देश्यकविधित्वाभावेन स्थानिवत्त्वाप्राप्तेः। न च वलोपो न परनिमित्त इति स्थानिवत्त्वाप्रवृत्तिरिति वाच्यम्, परस्मिन् सत्येव य आदेश इत्यर्थेन वव्रश्चेत्यत्रेवात्रापि प्रवृत्तेरित्यपि न युक्तम्, उप्रत्ययसन्नियोगशिष्टत्वेनोप्रत्ययाभावे वलोपाभावस्तत्सत्त्वे वलोपसत्त्वमित्यन्वयव्यतिरेकयोर्लाभेन वलोपस्योप्रत्ययनिमित्तकत्वेन हलादेशो न स्थानिवदिति ज्ञापितेऽपि वलोपे न धातुलोप इति गुणनिषेधेनाकारविधानस्य चारितार्थ्याभावेन ज्ञापकत्वासम्भवात्। तस्य प्रत्याख्यानमिति चेदस्तु तर्हि ज्ञापकत्वमेवेति बोध्यम्। यून इत्यादौ परयणः पूर्वं सम्प्रसारणेऽपि तस्य स्थानिवद्भावेन सम्प्रसारणपरत्वाभावेन न सम्प्रसारण इत्यस्याप्रवृत्त्या वैयर्थ्येन तदपि हलादेशो न स्थानिवदित्यत्र ज्ञापकन्द्रष्टव्यम्।

किञ्च भवितेत्यादौ टिलोपस्याज्झलादेशत्वेऽप्यजादेशत्वेन स्थानिवत्त्वादिटो गुणाभावोपपत्तौ दीधीवेवीटामित्यत्रत्येड्ग्रहणेनाज्झलादेशो न स्थानिवदिति ज्ञाप्यते। तत्फलितमेवाच एवादेशोऽजादेश इति यदि चातिषमित्यादाविटो गुणनिषेधार्थमिड्ग्रहणं प्रत्याख्यातञ्च न ज्ञापक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मित्युच्यते तर्हि लोलुवः पोपुव इत्यादावच्प्रत्ययनिमित्तको यङो लुक्-स्थानिवत्स्यादिति गुणाप्राप्त्या व्यर्थं न धात्विति सूत्रं ज्ञापकमुक्तार्थेऽवगन्तव्यम्। न च तत्सूत्रस्य प्रत्याख्यानान्न ज्ञापकत्वसम्भव इति वाच्यम्, यस्य हल इत्यत्र योगविभागाश्रयणेनाकारलोपं सम्भाव्य तस्य स्थानिवद्भावेन गुणवारणप्रयासस्य सूत्रप्रत्याख्यानाय भाष्यकृत्कृतस्यैवोक्तार्थज्ञापकत्वादन्यथाऽज्झलादेशस्यापि स्थानिवद्भावेन प्रत्याख्यानसम्भवादुक्तप्रयासवैयर्थ्यात्। एवं नाग्लोपीति सूत्रेऽग्लोपिग्रहणमप्युक्तार्थे ज्ञापकन्तद्धि अग्मात्रलोपे स्थानिवद्भावेनैव ह्रस्ववारणसम्भवात्, राजानमाख्यदरराजदित्यत्र णिज्निमित्तकान्लोपस्याज्मात्रस्थानिकादेशत्वाभावेन स्थानिवद्भावाप्रवृत्तौ प्राप्तस्योपधाह्रस्वस्य प्रतिषेधार्थम्, अज्झलादेशस्यापि स्थानिवत्त्वे तु तद्वैयर्थ्यं स्पष्टमेव। न च चङ्परनिर्ह्रासेति ह्रस्वप्रतिबन्धकस्थानिवत्त्वनिषेधान्नैतज्ज्ञापकमिति वाच्यम्। अवीवददित्यादौ ण्यन्ताण्णिचि नाग्लोपीतिनिषेधप्रतिप्रसवाय णिचि णेर्लोपे ह्रस्व इत्येतदर्थकेन णेर्णिच्युपसंख्यानमिति वार्त्तिकेनैव ह्रस्वसिद्धौ चङ्परनिर्ह्रास इत्यस्यानावश्यकत्वात्। न च इट्धातोः क्विपि इट् तस्यान्शब्देन समास इटन् तेन मनश्शब्दस्य समासे मनइटन् तत आचारणिजन्ताल्लुङि टिलोपे ह्रस्वस्य द्वित्वापेक्षया प्राबल्येऽपि इदानीमज्झलादेशस्यापि स्थानिवद्भावेनोपधात्वाभावेन ह्रस्वाप्राप्तौ यथेष्टन्नामधातुष्वितिवचनादिटो द्वित्वे हलादिश्शेषे दीर्घे इकारस्यान्रूपस्थानिनः पूर्वत्वेन दृष्टत्वाभावेन तस्य ह्रस्वे कर्त्तव्ये स्थानिवत्त्वाप्राप्त्या प्राप्तस्य ह्रस्वस्य वारणार्थमेवं गां ददातीति गोदस्तस्माण्णिचि टिलोपे लुङि चङि द्वित्वेऽजुगोददित्यादौ उपधाह्रस्ववारणार्थमग्लोपिग्रहणं स्थानिवद्भावस्य तु न प्राप्तिः पदान्तविधौ निषेधादित्याज्झलादेशो न स्थानिवदित्यत्र न ज्ञापकमिति वाच्यम्, यतः ठाजादावूर्ध्वं द्वितीयादच इत्यत्राज्ग्रहणमुक्तार्थज्ञापकन्तद्धि षडङ्गुलिदत्तशब्दाठ्ठकि इकादेशेऽनेनाङ्गुलिदत्तशब्दस्यैव द्वितीयादचः परस्य लोपार्थं तेनाकारस्य यस्येति लोपे तस्य स्थानिवद्भावेन भत्वाभावाज्जश्त्वमज्झलादेशस्यापि स्थानिवत्त्वे तु अज्ग्रहणाभावे द्वितीयाद्धलः परस्याङ्गुलिदत्तस्य लोपेऽपि तस्य स्थानिवत्त्वेन भत्वाभावेन जश्त्वस्यैव प्रवृत्तेः अज्झलादेशस्यापि स्थानिवत्त्वेऽज्ग्रहणसत्त्वेऽङ्गुलिदत्तस्य लोपे तस्य स्थानिवत्त्वेन यस्येतिलोपाप्राप्त्या गुणे षडेक इति अज्ग्रहणाभावे अङ्गुलिदत्तस्य लोपे षडिक इति फलभेदात् षड्उमापतिदत्तशब्दाठ्ठकि अज्ग्रहणे मादेर्लोपे तस्यापि स्थानिवद्भावेनोर्गुणाभावेन षड्उकस्तदभावे उकारादेर्लोपे षडिक इति फल-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भेदाच्च नोक्तार्थज्ञापकमिति चेन्मास्त्वन्वयवैचित्र्यादेवाच एवादेश इत्यर्थस्य साधितत्वात्।

ननु अच एवादेश इत्यस्य मरुत्तमाचष्टे मारयतीत्यादौ मरुच्छब्दाण्णिचि टेरुत्तो लोपस्य वृद्ध्यभावाय प्राप्तस्थानिवद्भावस्याभावः, फलं लोपस्याज्मात्रस्थानिकत्वाभावादिति चेत्–न। नाग्लोपीति सूत्रस्थागितिप्रत्याहारग्रहणस्य वृद्धेर्लोपो बलीयान् इत्यर्थज्ञापकत्वकथनपरभाष्यादिदुदुपधेभ्यो णिचोऽनभिधानेनोक्तरूपस्यैवाभावात्, इकारान्तादुकारान्ताच्च णिचि परत्वाद्वृद्धौ सत्यां टिलोपे ऐकारौकारयोरेव लोपेनाग्लोपाभावान्न तत्र निषेधप्रवृत्तिरकारान्तादृकारान्तात् लृकारान्ताण्णिचि वृद्धौ अकारलोप एव तर्ह्यल्लोपीत्येव वक्तव्ये अगिति प्रत्याहारग्रहणं ज्ञापकं वृद्धेर्लोपो बलीयानित्यत्र हरिन्मरुच्छब्दाण्णिचि तु वृद्धिगुणयोरप्राप्त्या टिलोपेऽगलोपित्वान्निषेधो भवति प्रत्याहारग्रहणे। तदग्रहणे तु निषेधो न स्यादिति प्रत्याहारग्रहणस्यावश्यकत्वेन ज्ञापकत्वानापत्तेः। न चोक्तभाष्यादिदुदुपधप्रातिपदिकप्रकृतिकणिजन्ताल्लुङ्नेत्येव कल्प्यतां तिप्यनभिधाने न मानमिति वाच्यम्, लाघवेन तादृशप्रातिपदिकाण्णिज्नेत्यस्यैव कल्पनीयत्वात्। न च स्रग्विणमाचष्टे स्रजयतीति भाष्यविरोधस्तत्रेदुपधादेव णिचो विधानादिति वाच्यम्, विनो लुक्य'ङ्गवृत्ते पुनरङ्गवृत्ता'विति परिभाषया वृद्ध्यभावेन लुङि ह्रस्वतदभावयोर्विशेषाभावेन ततो णिच्यपि फलभेदाभावेन तद्भिन्नेदुपधादेव णिचोऽनभिधानकल्पनादिति चेत्–न। सरोभवदादिप्रकृतिकणिचि टिलोपे सारयति भावयतीत्येतदुपलक्षणात्।

ननु वृत्रहणमाचष्टे वृत्रहयतीति भाष्यप्रयोगे वृद्धेरकरणेन प्रातिपदिकप्रकृतिकणिज्निमित्तकोपधावृद्धिर्नेतिकल्पनात्तत्र वृद्ध्यभाव एव न च वृत्रहयतीतिप्रयोगस्य वृद्धौ सत्यां टिलोप इति पक्षे पूर्वं वृद्धौ टिलोपे 'लक्ष्ये लक्षण'न्यायेन पुनर्वृद्ध्यप्राप्तेर्न्याय्यतयोक्तार्थज्ञापकत्वासम्भव इति वाच्यम्। स्रजयतीति भाष्यादेव तत्कल्पनस्यावश्यकत्वात्। अत एव दूरं दवयति, युवानमल्पम्वा कनयति, ह्रस्वं ह्रसयतीत्यादौ न वृद्धिः।

ननु संज्ञापूर्वको विधिरनित्य इति परिभाषया वृद्धेरनित्यत्वेन तेषु न वृद्धिरिति नोक्तार्थकल्पनावश्यकतेति चेन्न। तत्परिभाषयापि तत्र न वृद्धिरत्र न वृद्धिरित्यननुगतानित्यत्वकल्पनापेक्षया लाघवेनोक्तानुगतानित्यत्वकल्पनाया एव न्याय्यत्वात्। न च पटुमाचष्टे पटयतीत्यादावुपधावृद्ध्यभावस्योक्तकल्पनयैव सिद्धौ प्रकृतसूत्रोदाहरणत्वकथनपरभाष्यासङ्गतिरिति वाच्यम्। उपायस्योपायान्तरादूषकत्वादिति चेत्–अत्रोच्यते–

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऋच्छतीति ऋट् ततः पूर्वं वहुच्प्रत्यये वहुऋट् ऋत्यक इति प्रकृतिभावस्ततो णिचि टेर्लोपेऽवशिष्टस्य वहोर्णिज्निमित्तकवृद्धौ वाहयतीति भवति। अज्झलादेशस्य स्थानिवत्त्वे तु वृद्ध्यभावापत्तिरतस्तद्वारणायाच एवादेश इत्यर्थ इति।

यत्तु नेन्यः चेक्रियः लोलुव इत्यादीन्यपि फलान्यन्यथाऽच्प्रत्ययनिमित्तकयङ्लुकोऽज्झलादेशस्यापि स्थानिवद्भावापत्त्या यणि यङुवङामभावापत्तेरिति तन्न। न धातुलोप इत्यस्य प्रत्याख्यानायातो लोपः यस्य च हलः इति योगं विभज्य द्वितीययोगेऽत इत्यनुवर्त्य लुग्बाधकं यङोऽकारस्य लोपं विधाय तस्य स्थानिवद्भावेन गुणस्य वारणं भाष्यकृता कृतमिति न तत्राज्झलादेशोऽपि त्वज्मात्रस्थानिक एव तस्य स्थानिवद्भावेऽपि यणादीनां प्रवृत्तौ वाधकाभावात्।

केचित्तु भीधातोर्घञर्थे कप्रत्यये इयङि भियस्तमतति भियात् तमाचष्टे णिचि क्विपि णिलोपटिलोपयलोपेषु अवशिष्टस्य भीत्यस्य प्रत्ययलक्षणेन णिच्परे वृद्धौ भैरिति भवति। अज्झलादेशस्य स्थानिवत्त्वे तु वृद्धिर्न स्यादिति फलम्। न च वहिर्भूतक्विब्निमित्तकयलोपस्य वहिरङ्गत्वासिद्ध्या न वृद्धिरिति वाच्यम्, नाजानन्तर्य्ये इति निषेधात्। निर्दिश्यमानेऽच्येव णिचोऽन्वयात्। अजादेश इत्यस्याच्त्वप्रतियोगिकेत्याद्यर्थकरणात् पटयति निगाल्यत इत्यादौ टिलोपणिलोपादेः स्थानिवद्भावोऽच्त्वावच्छिन्नस्थानितानिरूपकादेश इत्यर्थे त्वत्र स्थानिवद्भावो न स्यादत्रत्यस्थानितायाष्टित्वणित्वावच्छिन्नत्वेनाच्त्वावच्छिन्नत्वाभावात्।

ननु स्थानिवदित्यस्य कोऽर्थः ? स्थानिनि सति यत्कार्य्यं भवति तदादेशेऽपि भवतीत्यर्थो वा, स्थानिनि यन्न भवति तदादेशेऽपि न भवतीत्यर्थो वा, उभयं वा ? नाद्यः, पटयतीत्यादावेतस्याप्रवृत्त्यापत्त्या स्वतः प्राप्ताया वृद्धेर्दुर्वारत्वात्। न द्वितीयः, स्थानिन्युकारे सत्यभवन्त्या वृद्धेरादेशेऽप्यभावेन पटयतीत्यस्य सिद्धावपि निगाल्यत इत्यसिद्ध्यापत्तेरादेशेऽनेन लत्वस्य प्रवर्त्तयितुमशक्यत्वात्। नापि तृतीयः, एकमेकमंशमादायोभयत्र निर्वाहेऽपि देवयतेः क्विपि णिलोपे कौ विधिमूठं प्रति स्थानिवत्त्वनिषेधादूठि अयादेशे सिद्धस्य द्यूरित्यस्यासिद्ध्यापत्तेः। स्थाानिनि णिचि सति ऊठोऽभावेनायादेशो न भवतीति स्थानिनि सत्यभवतोऽयादेशस्य स्थानिवद्भावेन णिलोपेऽभावापत्तेः। न च स्थानिधर्म्ममादेश आरोप्य यत्कार्य्यं प्राप्नोति तद्भवति यन्न प्राप्नोति तन्न भवतीत्यर्थः। पटयतीत्यत्र लोपरूपादेशे उत्वारोपे वृद्ध्यप्राप्तेः निगाल्यत इत्यत्र स्थानिगतणित्वस्यादेशे लोप आरोपे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृद्धेः प्राप्तेः दयूरित्यत्र णिलोपे णित्वारोपेऽपि ऊकारनिमित्तकायादेशस्य प्रतिबन्धकाभावेन सिद्धेश्च न दोष इति वाच्यम्। एषोऽयन्हसतीति-वदेषो गमयतीति भवति तत्रैतत्तदोरिति लोपस्य पदचरमावयवत्वाभावेन निषेधाप्राप्त्या गमादेशस्य स्थानिवद्भावेन हल्परत्वाभावेन लोपाप्राप्त्या हसि चेत्युत्वे गुणे च रूपसिद्धिर्भवति। सम्प्रति गमादेशे स्थानिगतत्व-स्यारोपेऽपि गकारे हल्त्वानपायेन सुलोपापत्त्या एष गमयतीत्यापत्तेरेषो गमयतीत्यनापत्तेश्च। इयायेत्यत्र स्थानिवद्भावेनायादेशस्येत्वेनासवर्णाच्-परत्वाभावेनेयङोऽप्राप्त्याऽभ्यासस्यासवर्णे इत्यस्याभ्यासकार्य्येत्याद्यर्थ-ज्ञापकत्वं **परिभाषेन्दुशेखरे** वार्णपरिभाषायामुक्तन्तद्विरोधोऽपि स्यात्, आयादेशे स्थानिवत्त्वेनेत्वेप्याकारे असवर्णाच्त्वाहानेरत्रोच्यते—स्थानी न निवृत्त आदेशो न जात इतिबुद्धौ यत्प्राप्तन्तद्भवति यन्न प्राप्तं तन्न भवतीत्यर्थस्तेन सर्वेष्टसिद्धिरादेशावस्थायां दयूरित्यादावुकारस्य सत्त्वेन णिलोपस्थाने णिरस्त्येवेति बुद्धावप्ययादेशप्राप्तेः गमादेशो न जात इणेवास्तीति बुद्धौ लोपाप्राप्तेश्चेति स्थानिभूतादचः पूर्वस्यैव ग्रहणान्न त्वादेशान्निमित्ताद्वा पूर्वस्य वैयाकरणेऽयादेशापत्तेरिति **मनोरमायामे**-वोक्तम्।

ननु तन्नाशे तत्पूर्वत्वनाशस्याप्यनुभवसिद्धत्वम्। न हि वृत्तनाशे वृत्त-पूर्वोयमिति कश्चिज्जानाति। ततश्च स्थानिनि आदेशेन नाशे स्थानिपूर्व-त्वस्याप्यभावात् कथमुच्यते स्थानिभूतादचः पूर्वस्येति चेत्-न। स्थानि-भूताचः पूर्वत्वमुपलक्षणन्न तु विशेषणमेतदेवोक्तं—स्थानिभूतादचः पूर्वत्वेन दृष्टस्येत्यनेन। तत्पूर्वत्वप्रकारकातीतकालिकश्रावणविषयस्येत्यर्थस्तत्पूर्वत्वस-मानाधिकरणधर्म्मवत इत्यर्थो वा। तेन पूर्वत्वाभावेऽपि तत्समानाधिकरण-धर्म्मस्य सत्त्वेनादोषः परस्मिन्नित्यादेशविशेषणमिति। न तु श्रुतत्वादचो विशेषणं पटयतीत्यत्र स्थानिभूतस्योकारस्य परनिमित्तकत्वाभावेन स्थानि-वद्भावाप्राप्त्या वृद्ध्यापत्तेः परस्मिन्निति यस्य च भावेन भावलक्षण-मित्यनेन सप्तमी परस्य सत्तारूपक्रियया आदेशस्य सत्तारूपा क्रिया लक्ष्यते इति परशब्दात्सप्तमी परस्य सत्त्वे एवादेशस्य स्थितिरिति प्रतीते-रादेशं प्रति नियतपूर्ववृत्तित्वरूपं निमित्तत्वं लब्धमिति परनिमित्तको य आदेश इत्यर्थलाभः। यद्यप्युपपदविभक्तेरिति न्यायादधिकरणसप्तम्या एवौचित्येन पराव्यवहितपूर्वो य आदेश इत्येवार्थो युक्तस्तथापि लक्ष्यानु-रोधात्सतीत्यध्याहारेण यस्य च भावेत्यनेनैवात्र सप्तमी पाणिन्यभिप्रेताऽ-न्यथा हरिणाकृतमित्यादौ कृतरूपपराव्यवहितपूर्वोनादेशस्सोऽपि स्थानि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वत्स्यादितीकारस्य यण् स्यात् सत्सप्तम्यां तु न दोषो नादेशस्य परनिमित्तकत्वाभावात्; परस्मिन्नित्यस्याभावेऽप्ययं दोषः। युवतिर्जाया अस्य युवजानिरित्यादावपि आकारस्य निङादेशोऽपि विसर्गाव्यवहितपूर्वत्वात्स्थानिवत्स्यादिति यलोपो न स्यात्, यलोपे निषेधस्तु न स्यात् स्वरदीर्घयलोपेषु लोपरूपाजादेशस्यैव स्थानिवत्त्वनिषेधात्, परस्मिन्नित्यस्याभावेऽप्ययं दोषः। न चोपपदविभक्तेरिति न्यायादधिकरणसप्तमी श्रुतत्वाच्चाचो विशेषणम्। ततश्च पराव्यवहितपूर्वो योऽच् तत्स्थानिको य आदेश इत्येवार्थो न्याय्यः। युवजानिरित्यत्र निङादेशकाल आकारो न पराव्यवहितपूर्वो विभक्त्युत्पत्तेः प्रागेव निङादेशप्रवृत्तेः। हरिणाकृतमित्यादौ च पदसंस्कारपक्षे हरिणेति पदं संस्कृत्य कृतमित्यनेन सम्बन्धे नाकारः पराव्यवहितपूर्व इति न दोष इति वाच्यम्, वाक्यसंस्कारपक्षे हरिणेत्यादौ पदसंस्कारपक्षे युवजानिरित्यादौ च दोषतादवस्थ्यात्; वित्तः जुहुत इत्यादौ लुकः श्लोश्च स्थानिवद्भावापत्त्या लघूपधगुणापत्तेः। जायाया जानिरित्यादेशेन युवजानिरित्यादौ न दोष इति तु न वाच्यम्, जायामाचष्टे णिचि टिलोपे क्विपि णिलोपयलोपयोर्जेति निष्पन्नस्यैकदेशविकृतन्यायेन जायाशब्दत्वात् युवतिर्जेति बहुव्रीहौ जान्यादेशे युवजानिर्निङादेशे युवज्निरिति फलभेदात् णिलोपस्य स्थानिवद्भावेन जायान्तोत्तरपदकबहुव्रीहित्वाभावान्नेष्यते। तत्र निङादेश इति चेत्तस्य जाशब्दस्यैशब्देन समासे जैशब्दस्य पूर्वान्तवद्भावेन जायाशब्दत्वात्तस्य स्थानिभूतादचः पूर्वत्वाभावेन स्थानिवत्त्वाभावात्। तत्र बहुव्रीहौ फलभेदो बोध्यः। निगागमोऽन्तस्य लोप इत्यर्थकजायाया निकूलोपेश्चेति न्यासे लाघवाभावः। ङित्वस्य आचारक्विन्तादात्मनेपदार्थत्वाच्च लोपो व्योर्निङ्वलोरिति न्यासेन विशिष्य निङिपरे यलोपविधानसामर्थ्यात्स्थानिवत्त्वाभावेन युवजानिसिद्धिरित्यपि लाघवाभावादेव निरस्तम्। द्वौ द्वौ पादौ ददातीति विग्रहे वुन्प्रत्ययोऽकारलोपश्च पादशतस्येत्यनेन भवति। ततश्च पदादेशेऽपरनिमित्तकोऽप्यकारलोपः स्थानिवत्स्यादिति पदादेशो न स्यात्पादन्तत्वाभावादित्यपि फलम्।

न चैवं यस्येति चेति सिद्धे लोपविधानसामर्थ्यान्न स्थानिवदिति न दोष इति वाच्यम्, पादशब्दस्येशब्देन समासे पूर्वान्तवत्त्वेन पादशब्दत्वात्तत्रैकारस्य वुन्प्रत्ययसन्नियोगेन लोपार्थन्तस्यावश्यकत्वात् व्याघ्रस्येव पादावस्य व्याघ्रपात् तस्य व्याघ्रपद इत्यत्र पादस्य लोप इत्यकारलोपस्य स्थानिवद्भावे पादः पदिति पदादेशो न स्यात्पादन्तत्वाभावादितीदमपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

फलम्। न चैवं लोपं विहाय पादादेशविधानेनैवोक्तरूपसिद्धिरिति वाच्यम्, पादमाचष्टे णिचि क्विपि णिलोपटिलोपयोः पात्, तस्य व्याघ्रादिभिस्समासे समासान्तलोपे व्याघ्रपा इति पादादेशे व्याघ्रपादिति फलभेदात्। णिलोपस्य स्थानिवत्त्वन्तु न क्वौ लुप्तमिति तन्निषेधात्, अनेन पादादेशे प्रतिपदोक्तत्वादेतदन्तस्यैव पादादेशे पादमाचष्टे णिचि क्विपि णिलोपाल्लो-पटिलोपैर्निष्पन्नपाच्छब्दस्य शसि पदादेशानापत्तेश्चात एव पादः पदिति सूत्रारम्भसामर्थ्यान्न स्थानिवदित्यपास्तम्। न चापरनिमित्तकस्यापि स्थानिवत्त्वे 'औङः श्यां प्रतिषेधो वक्तव्य' इति वार्त्तिकस्य वैयर्थ्येन तत्सामर्थ्यादपरनिमित्तको न स्थानिवदिति ज्ञापनान्न दोष इति वाच्यम्, सूत्रप्रणयनसमये वार्त्तिकस्यासत्त्वेन तत्सामर्थ्येन ज्ञापनासम्भवादित्यलम्।

पूर्व्वविधावित्यस्याभावे नैधेय इति दूषणं शेखरे एव दत्तम्। तत्र निपूर्वाद्धाधातोः किप्रत्यय आलोपः परनिमित्तकस्तस्यापि स्थानिवद्भावे द्व्यच्त्वव्यपदेशेन तद्विरुद्धद्व्यच्त्वनिमित्तको ढक् न स्यात्, तदुक्तौ तु पूर्वस्य कार्य्याभावेनादोषः। पूर्वस्यैव विधौ कर्त्तव्य इति तस्यार्थस्तेनार-तुरित्यादौ ऋऋ ऋतुसिति स्थिते उरदत्वे उत्तरखण्डे ऋच्छत्यृतामिति गुणे अ-अर्-ऋतुसिति स्थिते सवर्णदीर्घे आरतुरिति भवति। तत्र सवर्णदीर्घे कर्त्तव्ये गुणो न स्थानिवत्, दीर्घस्य पूर्वपरोभयसम्बन्धि-त्वात्।

अत्रेदं चिन्त्यते—ऋच्छत्यृतामितिसूत्रे ऋकारप्रश्लेषोऽपि मास्तु पूर्वस्मिन्नेवेत्यर्थोऽपि मास्तु, आरतुरित्यत्र द्विर्वचनेऽचीति पूर्वं द्वित्वे ऋऋ ऋतुसिति स्थिते आङ्गत्वाद्दीर्घात्पूर्वमुरदत्वे हलादिः शेषे अत आदेरिति दीर्घे यणि आरतुरिति सिद्ध्यति। न च परत्वात् पूर्वोपस्थितनिमित्तकत्वे-नान्तरङ्गत्वाच्च पूर्वं गुणे 'लक्ष्ये लक्षण'न्यायेन पुनर्दीर्घाप्रवृत्तेररतुरिति स्यादिति वाच्यम्। अऋ ऋतुसिति स्थिते दीर्घगुणयणादेशानां प्राप्तौ पूर्वोपस्थितनिमित्तकत्वेन यणपेक्षयाऽनयोरन्तरङ्गत्वादनयोश्चाततुरानृजे इत्यादिसकललक्ष्यप्राप्तस्य पररूपगुणान्यतरस्य पूर्वान्तवद्भावेनाभ्या-सत्वात्, कृतेऽन्यतरस्मिन् चरितार्थेन दीर्घेण तक्रन्यायेन बाधात् पूर्वं दीर्घे पुनर्गुणाप्रवृत्त्या यणि रूपसिद्धेरिति चेत्—न। ऋतेर्लिटि क्सौ ऋवसिति स्थिते कृतद्वित्वैकाच्त्वाभावेन वस्वेकाजित्यस्याप्रवृत्तौ द्वित्वे अऋ वसिति स्थिते उरदत्वे हलादिः शेषे अऋवसिति स्थिते गुणं बाधित्वाऽत आदेरिति दीर्घे पुनर्गुणाप्राप्तौ आऋवानित्यापत्तेरिष्यते तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अऋवसिति स्थिते उरदत्वे अत आदेरिति दीर्घे ऋच्छत्यृतामित्यत्र ऋकारप्रश्लेषेण गुणे सवर्णदीर्घे कृतद्वित्वैकाच्त्वेन वस्वेकाजितीटि आरिवानिति तस्यासिद्धापत्तेः। न चाभ्यासकार्य्ये उत्तरखण्डाजादेशस्य स्थानिवत्वनिषेधान्न दोषो दीर्घस्याभ्यासतदुत्तरखण्डोभयकार्य्यत्वेऽप्य-भ्यासकार्य्यत्वाक्षतेरिति वाच्यम्। अभ्यासत्वावच्छिन्नोद्देश्यताककार्य्ये एव तन्निषेधाभ्युपगमस्य धर्मिग्राहकमानेन सत्त्वादत एव विव्यतुरित्यादा-वभ्यासावयवेकारस्योपधायाञ्चेत्यनेन दीर्घवारणायोत्तरखण्डाजादेशस्था-निवद्भावस्य नानेन निषेधः। न चेट्किट्कटीत्यत्र प्रश्लिष्टस्य ह्रस्वेकाररू-पधातोर्लिटि अतुसि द्वित्वे इ-इ अतुसिति स्थिते एरनेकाच इत्यनेनाङ्ग-त्वाद्दीर्घं बाधित्वोत्तरखण्डस्य यणि इयतुरित्यादावुत्तरखण्डस्य यणः स्थानिवत्त्वेनाभ्यासेकारस्य यणोभावाय स्थानिवत्त्वनिषेधस्यानुपपत्त्या-ऽभ्यासत्वावच्छिन्नोद्देश्यताककार्य्यविषयकत्वस्य वक्तुमशक्यत्वमिति वाच्यम्। तत्र स्थानिवत्त्वेऽपि सवर्णाजव्यवहितपूर्वत्वस्यैव सत्त्वेनेको यणचीत्यस्योद्देश्यतावच्छेदकेऽकः सवर्ण इत्यनेन सवर्णाजव्यवहितपूर्व-भिन्नत्वस्यापि निवेशेन सवर्णाजव्यवहितपूर्वभिन्नस्येको यणित्यर्थकस्येको यणचीत्यस्य प्रवृत्त्यभावात्। न च सवर्णदीर्घाभावार्थं एव स्थानिवत्त्व-निषेध आवश्यक इति वाच्यम्, पूर्वस्यैव विधावित्यर्थेनैव स्थानिवत्त्वा-भावसिद्धेः। न च विव्यतुरित्यादौ दीर्घेऽपि ह्रस्व इति ह्रस्वत्वेनादोष इति वाच्यम्, दीर्घस्यासिद्धत्वादाङ्गत्वाच्च, पूर्वं पर्य्यन्यवद्ध्रस्वप्रवृत्तौ दीर्घे 'लक्ष्ये लक्षण'न्यायेन पुनर्ह्रस्वत्वाप्रवृत्तेः। यदि तु उपधायाञ्चेत्यनेन प्रत्यासत्त्या धात्ववयवस्यैवेको दीर्घोऽभ्यासस्य धात्वनवयवत्वात् स्थानिवत्त्वा-भावेऽपि विव्यतुरित्यत्रादोषादभ्यासत्वावच्छिन्नोद्देश्यताकत्वनिवेशे फला-भावेन तेन निषेधादेव सिद्धिरित्युच्यते तदा पूर्वस्यैवेत्यस्य नेदं फलम्। यदा तु अभ्यासमात्रोद्देश्यककार्य्ये एव निषेध इत्युच्यते तदा तस्य तत् फलं सम्यगेव।

किञ्च द्वित्वनिमित्ततापर्य्याप्त्यधिकरणघटकाच्पर्य्याप्तनिमित्तताक-कार्य्यस्यैव द्विर्वचनेऽचीत्यनेन निषेधादारतुरित्यादौ तदप्राप्तेः परत्वात् गुणे द्वित्वे अकारस्य स्थानिभूतादचः पूर्वत्वाभावेन स्थानिवत्त्वाभावोपप-त्तेर्नोक्तार्थस्य फलम्। किञ्च हे पित्तन्न इत्यत्र गुरोरनृत इति प्लुतार्थं संय्योगसंज्ञायां कर्त्तव्यायामकारलोपस्य स्थानिवत्त्वाभावार्थं पूर्वस्यैव विधावित्यर्थ आवश्यकोऽन्यथा यथाकथञ्चित्संय्योगसंज्ञायाः पूर्वसम्बन्धि-त्वेन स्थानिवत्त्वं दुर्वारम्। एवमत्तेर्लङि लावस्थायामेवाटि तिपि शपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऋच्छादेशस्तस्य वृद्धौ कर्त्तव्यायां स्थानिवद्भावे ऋवुद्ध्या छकारसहितस्याटश्चेत्यनेन वृद्धिस्स्यात्, पूर्वस्येवेत्यर्थे तु न भवति वृद्धेः पूर्वपरोभयसम्बन्धित्वात्। कृष्ण इवाचरति कृष्णायते अत्र क्यङन्तात्क्विप्यल्लोपयलोपे कृष्णा इति तस्मादौ विभक्तौ वृद्धिः कृष्णाविति। तत्राप्यलोपस्य स्थानिवत्त्वे वृद्धिर्न्न स्यात्, तदुक्तौ तु न दोषः। एवं हयशव्दादाचारक्विवन्तात्कर्त्तरि क्विप्यलोपे यलोपे औपरे वृद्धौ कर्त्तव्यायामलोपस्य स्थानिवत्त्वं स्यात्तदुक्तौ न भवति। क्वौ लुप्तमित्यस्यासार्वत्रिकत्वान्न तेन सिद्ध्याशा पट्वशव्दस्यान्शव्देन समासे पट्वन् शव्दाच्छसि यणः स्थानिवत्त्वेन संयोगसंज्ञाया अभावेन न संयोगादिति निषेधाप्राप्त्याऽलोपापत्तिस्तदुक्तौ न भवतीति दिक्।

विधिशव्दे कर्म्मणि प्रत्यये विधीयते इति विधिः कार्य्यं पूर्वस्येति सम्वन्धसामान्यवोधकषष्ठ्यन्तस्य विधिशव्देन समासे पूर्वोद्देश्यककार्य्ये कर्त्तव्य इत्यर्थः। पूर्वविधिशव्दस्यावृत्त्या द्वितीये पञ्चमीसमासेन च पूर्वस्मात्परस्य कार्य्ये कर्त्तव्य इत्यप्यर्थः। विधिशव्द आवृत्त्या द्वितीये भावप्रत्यये पूर्वस्येत्यस्य कर्तृषष्ठ्यन्तस्य समासे पूर्वस्य विधिर्विधानं भावः स्थितिस्तत्र कर्त्तव्य इत्यर्थः। पञ्चमीसमासस्य फलं ऐर्त्सन् ऋधातोस्सन्नन्ताल्लङो झेर्झस्यान्तादेशे शपि आप्ज्ञप् ऋधामीदिति ऋकारस्येत्वे रपरत्वेऽत्र लोपोऽभ्यासस्येत्यभ्यासलोपे धस्य चर्त्वे आटश्चेति वृद्धौ ऐर्त्स अन्तीति स्थिताविकारलोपे तकारस्य संयोगान्तलोपे पूर्वरूपद्वये ऐर्त्सन्निति सिद्ध्यति। तत्रानुमानिकस्थान्यादेशभावमादाय स्थानिवद्भावेनाभ्यस्तत्वं यत् सन्नन्ते तदेकदेशविकृतन्यायेन सान्ते आनीयानुमानिकादेशत्वमाश्रित्यैवान्तिशव्दे झित्वं तदेकदेशविकृतन्यायेन तान्ते तदेव तेनैव न्यायेन नान्ते परादिवद्भावेनैकादेशविशिष्टे अन्नित्यत्रानीय सिजभ्यस्तेति जुसापत्तिवारणायैकादेशस्य स्थानिभूतादचः पूर्व्वस्सकारस्ततः परस्य विधौ स्थानिवद्भावः वस्तुतोऽपवादस्य विषयपरिहारेणैवोपसञ्जनिष्यमाणन्यायेनोत्सर्गप्रवृत्तेर्ज्जुसो विषयेऽन्तादेशाप्राप्त्या शपैकादेशे पूर्वान्तवद्भावेनाभ्यस्तत्वात्ततः परस्य जुसापत्तिः प्राप्ता। न च कार्य्यकालपक्षे एकापाये द्वाविविबुद्ध्यभाववदभ्यासलोपे उभे इति बुद्ध्यभावेन उभेऽभ्यस्तमित्यभ्यस्तसंज्ञाऽभावादेव जुसो प्राप्त्येष्टसिद्धेः पञ्चमीसमासस्य नोपयोगो लक्ष्यानुरोधाद्यथोद्देशपक्षानाश्रयणादिति वाच्यम्। प्रत्यैषिषन्नित्यत्र इणधातोस्सन्नन्ताल्लङि द्वितीयैकाचो द्वित्वे अभ्यासस्येत्वे आटि वृद्धौ शपैकादेशे पञ्चमीसमासेन स्थानिवद्भावं विना जुसापत्तेर्वारयितुमशक्यत्वात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न च पूर्वोत्तरसाहचर्य्यादनतिदिष्टस्यैवाभ्यस्तस्य ग्रहणादत्र चाभ्यस्तस्यातिदिष्टत्वान्न जुसापत्तिरिति वाच्यम्। अनेनिजुरित्यनापत्तेरविदुरित्यादावतिदिष्टस्यैवार्थवतो विदस्सत्त्वाच्च। विधिशब्दे भावसाधनस्य फलमैनेयः, एत शब्दस्य स्त्रियामेनी ततो ढकि एयादेशे यस्येति चेतीकारलोपे सन्नियोगशिष्टन्यायेन नकारस्याप्यपाये प्राप्त ईकारलोपस्य नकारस्थितौ कर्त्तव्यायां स्थानिवत्त्वेनान्यतरापायाभावान्न नकारापाय इति शेखरे उक्तम्।

वस्तुतस्तु सन्नियोगशिष्टानामिति परिभाषया नकारस्यापायरूपे विधेये कर्त्तव्ये तत्प्रतिवन्धार्थस्थानिवत्त्वस्य कर्म्मसाधनेऽपि प्रवृत्तेर्न्न भावसाधनोपयोग इति बोध्यम्। भावसाधनो विज्ञास्यत इति भाष्यन्तु आभीयासिद्धत्वेनान्यथा सिद्धस्यायन्नासन्निति प्रयोगस्य साधनार्थं प्रवृत्तत्वादेकदेश्युक्तिभूतमिति न तद्विरोधो दोषायेति दिक्॥

---

## ७. न पदान्तद्विर्वचनवरे यलोपस्वरसवर्णानुस्वार-दीर्घजश्चर्विधिषु १।१।५८

अत्र पदान्त-द्विर्वचन-यलोप-स्वर-सवर्णानुस्वार-दीर्घ-जश्चर्पदार्थानां द्वन्द्वनिर्दिष्टानां सर्वेषां विधिपदार्थेऽन्वयो 'द्वन्द्वान्त' इति न्यायात्। पदस्यान्तश्चरमावयवः, विधानं विधिः, भावे किः, पदान्तस्य विधिः पदान्तविधिः कर्म्मषष्ठ्या समासः, तथा च पदचरमावयवादिकार्य्यकर्म्मकविधाने कर्त्तव्ये परनिमित्त आदेशो न स्थानिवदित्यर्थः। वरे इति भिन्नं वाक्यम्। तस्य च वरच्प्रत्ययनिमित्तको लोपो न स्थानिवदिति पृथगेवार्थस्तस्य. विधावन्वयाभावेनैकधर्म्मावच्छिन्नान्वयित्वरूपसाहित्याभावेऽपि पदान्तादीनां चर्पर्य्यन्तानां सौत्रत्वाद् द्वन्द्वः, सप्तम्या अलुक् च, यलोपेत्यत्र लोपपदस्यावृत्त्यैकस्य लोपस्यात्र सम्वन्धः। भाष्ये लुप्तमित्यत्र भावे क्तः, एतद्वाक्यस्योदाहरणं यायावरः। यातेर्य्यङन्ताद्वरचि द्वित्वे अल्लोपे यलोपस्तस्मिन् कर्त्तव्येऽलोपो न स्थानिवद्यलोपविधौ निषेधात्, अलोपस्य स्थानिवद्भावेनाजादिङिन्निमित्तक आतो लोपस्तु नानेन निषेधात्। न च यकारे सत्यकारस्य प्रत्ययत्वाभावेन कथन्तल्लोपस्य स्थानिवद्भावेनाजादिङित्प्रत्ययत्वमिति वाच्यम्, स्थानिवृत्तित्वेन सम्भावितस्यापि धर्म्मस्य स्थानिवद्भावेन लाभ इत्यर्थस्य वरेग्रहणेनैव ज्ञापनादत एव यातेर्य्यङन्तात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्विचि द्वित्वेऽलोपे यलोपेऽलोपस्यैव स्थानिवद्भावेनाकारवृत्तित्वेन सम्भावितप्रत्ययत्वमादाय धातोराकारस्यातो लोप इटि चेति लोपे यलोपे यातिरिति सिद्ध्यति। यदि पूर्वं यलोपस्यात्तदाऽकारस्य प्रत्ययत्वं स्यादिति सम्भावनामात्रेण प्रत्ययत्वस्याकारवृत्तित्वमिति भावः। स्पष्टं चेदमत्रैव शब्दरत्ने पदान्तविधावुदाहरणम्। कानि सन्ति, कौ स्तः, अत्र वाक्यसंस्कारपक्षे किम् अस् अस् अन्ति कौ अस्तमित्यवस्थायां पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात्क्रमेण जसादेः श्यादेशादौ कार्य्ये कृते कानीत्यादाविकारादेर्लोपीयस्थानिताश्रयाकाराद्यपेक्षया पूर्वत्वेन दृष्टत्वात्तेषां यणावादेशादिकार्य्ये कर्त्तव्ये प्राप्तस्याल्लोपस्थानिवद्भावस्यानेन निषेधो यणावादेशयोः पदचरमावयवत्वात्। यदि च पदसंस्कारपक्षमाश्रित्य सन्ति स्त इति संसाध्य कानि कावित्यस्य सम्बन्धे इकारादेः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावेन स्थानिवद्भावाप्राप्त्या रूपसिद्धिरित्युच्यते, तदा पदान्तविधावित्यस्योदाहरणमेषो यन्हसतीत्यादौ, अत्र हि इण् धातोर्लटः शतरीणो यणिति यणि यन्निति रूपन्तत्रैतच्छब्दप्रकृतिकसुस्थानिकरेफस्योत्वे कर्त्तव्ये यणादेशस्थानिवत्त्वस्यानेन निषेध उत्वस्य पदचरमावयवत्वात्। पदसंस्कारपक्षाश्रयणेन तु न निर्वाहस्तथा सति एतत्प्रकृतिकसोर्य्यणःस्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात्तस्यैतत्तदोरितिलोपे कर्त्तव्ये यणःस्थानिवत्त्वाभावात्सुलोपापत्त्यैषोयन्निति रूपासिद्धिप्रसङ्गात्। विधीयत इति विधिः कर्म्मणि किः कार्य्यमित्यर्थः। पदान्तस्य विधिरिति शेषषष्ठ्या समासे पदान्तस्थानिके कार्य्ये कर्त्तव्य इत्यर्थस्तु न युक्तो वृक्षं वेति वातिवेति विग्रहे वृक्षोपपदात् वीधातोर्वा क्विपि तदन्तादाचष्टे अर्थे णिचि विचि णिलोपटिलोपयोर्वृक्षव्करोतीत्यत्र लोपो व्योरिति वलोपापत्तेस्तस्मिन् कर्त्तव्ये टिलोपणिलोपयोः स्थानिवत्त्वन्तु न तत्करोत्याचष्ट इत्यर्थे द्वितीयान्तात् णिजुत्पत्त्या प्रत्ययलक्षणेन वान्तस्य पदत्वेन पदान्तवकारस्थानिकलोपरूपे कार्य्ये कर्त्तव्येऽनेन निषेधात्। भावसाधने तु न दोषो लोपस्य पदान्तत्वाभावेन पदचरमावयवकर्म्मकविधानाभावेन निषेधाप्राप्त्या टिलोपादेः स्थानिवत्त्वादिति**मनोरमाकारास्तन्न**। प्रातिपदिकाण्णिजुत्पत्त्या वकारस्य पदान्तत्वाभावात्, वृक्षव्प्रकृतिकसुपमादाय वान्तस्य पदत्वात् वकारस्य पदान्तत्वमित्यपि न णिलोपस्य स्थानिवत्त्वात्। पदान्तविधौ निषेधस्तु न स्थानिवद्भावनिषेधे पदान्तत्वं पदान्तत्वे च निषेध इत्यन्योन्याश्रयात्, न हि पदान्ताः परेऽणस्सन्तीति भाष्यात्तस्यानभिधानाच्च। तर्हि तस्यार्थस्य परित्यागः किमिति चेच्छृणु—एषो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यन्ह्सतीत्यादौ सुलोपे प्राप्तस्य यण्स्थानिवत्त्वस्यानेन निषेधापत्त्या सुलोपापत्तेः, कर्म्मसाधनस्य परित्याग इति।

ननु एषो यन्निति रूपस्य प्रामाणिकत्वे एव भावसाधनफलत्वन्तदेवासिद्धं पदसंस्कारपक्षाश्रयणेन यन्निति रूपं संसाध्यैतच्छब्दसम्बन्धेन सोः स्थानिभूतादचः पूर्वत्वाभावेन लोपे कर्त्तव्येऽचः परस्मिन्नित्यस्य स्वत एवाप्रवृत्त्या सुलोपेनैषयन्नित्येव साधु। एवमस्धातोस्सन्निति रूपं संसाध्य तच्छब्दसम्बन्धे ससन्निति लोपघटित एव प्रयोगो न तु सस्सन्निति। अस्तु वा वाक्यसंस्कारपक्षस्तथापि पादस्य लोपो हस्त्यादिभ्य इति लोपो यथासमासान्तः स्थानिद्वारा वा बौद्धो वा तथा प्रकृतेऽपि स्थानिद्वारकं बौद्धं वा पदान्तत्वमभावेऽक्षतमेवेति स्थानिवत्त्वनिषेधाल्लोप इष्यत एव। एवं मधुन अः मध्वस्तत आचारक्विबन्ताद्धनिप्यल्लोपे वलि परे वलोपे कर्त्तव्ये प्राप्तस्याल्लोपस्थानिवत्त्वस्य निषेधो नानेन लोपस्य पदचरमावयवत्वाभावादिति फलं भावसाधनस्येत्यपि न, लोपस्यापि पूर्ववत्पदचरमावयवत्वात्। अत एव देवदत्तस्य न शब्देन समासे देवदत्तनस्तस्तृतीयाया इनादेशे देवदत्तनेनेत्यत्र परादिवद्भावेनैनेत्यस्य स्वादित्वात्तस्मिन्नान्तस्य भत्वे अल्लोपो न इत्यल्लोपे कर्त्तव्ये प्राप्तस्य गुणादेशस्थानिवत्त्वस्य निषेधो न, लोपस्य पदानवयवत्वादित्यपि भावसाधनस्य न फलमुक्तयुक्तेः।

परे तु पादस्य लोप इत्यस्य समासान्ताधिकारे पाठसामर्थ्यात्, स्थानिद्वारकान्तत्वग्रहणेऽप्यन्यत्र तथाग्रहणे प्रमाणाभावात् भावसाधनस्य भाष्यसम्मतत्वेन तदनुसारेण वाक्यसंस्कारपक्षे निष्पन्नस्यैषो यन्ह्सतीत्यस्यापलपितुमशक्यत्वाच्च, भावसाधनेन सिद्धस्यैषो यन्नित्यस्य प्रकारान्तरेण साधने एव तस्याफलत्वसम्भवाच्च तस्मात्सर्वं भावसाधनस्य फलमेवेत्याहुः।

किञ्च भाष्योक्तं षडिक इति च फलं षडङ्गुलिशब्दात् बह्वचोमनुष्यनाम्नष्ठज्वेति ठचि कृते ठाजादावूर्ध्वं द्वितीयादच इत्यनेनाजादौ ठचि द्वितीयादच ऊर्ध्वं लुप्यत इत्यर्थकेनाङ्गुलिशब्दस्य लोपेऽकारस्य यस्येति लोपे षष्शब्दप्रकृतिकविभक्तिनिमित्तकपदत्वाज्जश्त्वे षडिक इति सिद्ध्यति तत्र समानावधिकयेकनिमित्तकभसंज्ञया पदत्वस्य बाधाज्जश्त्वाभावस्तु न, भसंज्ञायां कर्त्तव्यायां यस्येति लोपस्य स्थानिवत्त्वात्, अनेन निषेधस्तु न भसंज्ञायाः पदचरमावयवत्वाभावात्, कर्म्मसाधने तु भसंज्ञायाः पदान्तोद्देश्यककार्य्यत्वेन स्थानिवद्भावनिषेधेन भत्वाज्जश्त्वाभा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वापत्तेः। न च वाचिको न सिद्ध्यति वागाशीश्शब्दात्क्विपि शीरित्यस्योक्तप्रकारेण लोपे आकारस्य यस्येति लोपे तस्य स्थानिवद्भावेन भत्वाभावेऽन्तर्वर्त्तिविभक्त्या पदत्वेन जश्त्वापत्तेरिति वाच्यम्, कर्त्तव्योऽत्र यत्न इति भाष्येण समाधानात् यत्नश्चायम् एकाक्षरपूर्वपदानामुत्तरपदलोप इत्यनेन वाचिकस्सिद्धः। आशीश्शब्दस्य लोपेनाजादेशत्वाभावेन स्थानिवद्भावाप्राप्तेः षडिक इत्यर्थञ्च षषष्ठाजादावूर्ध्वमिति पठनीयमिति न वाचिक इत्यत्र तत्प्रवृत्तिः। किञ्च कर्म्मसाधने विधिशब्दे शेषषष्ठ्या समासे पदान्तांशे पदान्तोद्देश्यके कार्य्ये कर्त्तव्ये इत्यर्थसम्भवेऽपि द्विर्वचनाद्युद्देश्यककार्याभावेन तदंशेऽनन्वयापत्तेः, द्विर्वचनादिविधौ निषेधानापत्तेश्च। विधिशब्देन पदान्तादीनां कर्म्मधारये तु क्रियाशब्दतया विशेषणत्वापत्तौ तस्य पूर्वनिपातापत्तेः पूर्वनिपातप्रकरणस्यानित्यत्वमेतन्निर्देशादाश्रयणीयमितित्वगतिकगतिभूतम्। तस्माद्भावसाधनमेव युक्तम्।

भानोरः भान्वस्तत आचार क्विबन्ताद्धनिप्यलोपे वलोपे कर्तव्ये अलोपस्य स्थानिवद्भावोऽनेन निषेधस्तु न लोपस्य पदान्तोद्देश्यकत्वेऽपि पदान्तत्वाभावादित्येतदपि भावसाधनस्य फलम्। इदन्तु वोध्यं पदचरमावयवकार्य्यस्य साक्षात् साधकः साक्षात्प्रतिबन्धकः परंपरा प्रतिबन्धकश्च स्थानिवद्भावोऽनेन निषिध्यते न परंपराप्रापकः, आद्यस्य फलं कानि सन्ति दध्युपपदकेणधातोः कप्रत्यये यणि दधिय इत्यत्र यणि कर्तव्ये यणो न स्थानिवदिति च फलं, द्वितीयस्यैषो यन्हसति अत्रोत्वे न स्थानिवत्, तृतीयस्य तु दधि ऋच्छति दध्यार इति अत्राणनिमित्तको वृद्ध्यादेशो न स्थानिवदस्य स्थानिवद्भावस्य हि ऋत्यक इति प्रकृतिभावद्वारा पदचरमावयवस्य यणः परंपरया प्रतिवन्धकत्वात् परंपराप्रापकस्य ग्रहणे तु षडिक इति न सिद्ध्यति। तत्र भत्वप्रतिबन्धकस्थानिवद्भावस्य परंपरया पदान्तजश्त्वप्रापकस्य निषेधापत्त्या भत्वेन जश्त्वानापत्तेः।

ननु ऋत्यक इत्यनेन ह्रस्वस्यापि विधानेन तत्रत्यस्थानिवद्भावस्यापि साक्षात् पदान्तविधिप्रापकत्वेनैव संग्रहात् परंपराप्रतिबन्धकस्य ग्रहणेन फलमिति चेत्-अस्तु तावतापि क्षतिविरहात्। ननु परंपराप्रतिवन्धकस्यैवं सति न फलमिति चेत्-अत्रोच्यते-व्याघ्रपाच्छब्दस्याशब्देन समासे आचारक्विबन्ताद्विच्यलोपे टाविभक्तौ भत्वेन पदादेशे व्याघ्रपदेति भवति। तत्राल्लोपस्थानिवद्भावस्य पदान्तनिष्ठभत्वप्रतिवन्धद्वारा पदादेशरूपपदान्तविधिप्रतिबन्धकस्यानेन निषेधः। ननु द्विर्वचनसवर्णानुस्वारजश्चरां त्रिपादीस्थत्वेनातिदेशदृष्ट्याऽसिद्धत्वेनाचः परस्मिन्नित्यस्य तेषु कर्त्तव्येषु



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रवृत्त्या द्विर्वचनादिग्रहणं व्यर्थं सदतिदेशानां वतिघटितानां त्रिपाद्यामपि प्रवृत्तिरिति ज्ञापयति श्लेश्वरेऽन्यातिदेशेत्यत्रान्येति फलितार्थकथनमन्यत्र धातुग्रहणेनेतिवत् न तु ज्ञाप्यकोटौ प्रविष्टन्तथा सति द्विर्वचनादिग्रहणस्य ज्ञापितेऽपि स्वांशे चारितार्थ्यानापत्तेः वतिघटितेति कथनादसिद्धं वहिरङ्गमित्यस्य त्रिपाद्यामप्रवृत्तावपि न विरोधः।

ननु प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रे वतिघटितत्वाभावेन त्रिपाद्यामप्रवृत्त्यापत्तौ हे दीर्घाह्नो निदाघेत्यादावसुपीति निषेधाप्रवृत्तौ नकारस्य रत्वेनोत्वानापत्तिरिति चेत्-न। तस्य नियमार्थत्वेन स्थानिवत्सूत्रेणैव तत्र सुप्परत्वात् विधिमुखेन नियमस्य प्रवृत्तावपीतरनिवृत्तावेव तात्पर्य्यात् प्रत्ययलोपे प्रत्ययवदिति न्यासस्यैव नागेशसम्मतत्वाच्च। नखैर्निर्भिन्न इत्यादौ प्रत्ययस्थानिककार्य्याभावरूपस्य लक्षणग्रहणफलस्यातिदेशेनोच्चारणप्रसङ्गरूपस्थानषष्ठ्यर्थालाभ इत्यनेनान्यथासिद्धेस्तेनोक्तत्वात्। नन्वतिदेशसूत्राणामिति ज्ञाप्यशरीरकरणेनैवान्तरंगपरिभाषाव्यावृत्तौ वतिघटितेति निवेशो व्यर्थ इति चेत्-न, लाघवाभावात्, परिभाषाया अपि संज्ञा च परिभाषा चेत्यनेन सूत्रे एव परिगणितत्वाच्च, व्यपदेशिवदेकस्मिन्निति लोकसिद्धस्यासङ्ग्रहापत्तौ घुगित्यादौ भष्भावे कर्त्तव्येऽप्रवृत्त्यापत्तेश्चेति दिक्। न च पूर्वत्रासिद्धे न स्थानिवदित्यस्यासिद्धत्वमूलकतयाऽसिद्धत्वस्य चातिदेशं प्रत्यनेन ज्ञापनेनाभावे द्विर्वचनादिपरिगणितभिन्नत्रिपादीस्थकार्य्येऽचः परस्मिन्नित्यस्य प्रवृत्तौ बाधकाभावेन संय्योगादिलोपलत्वणत्वेषु तस्य दोष इत्यादिवचनमन्तरेणैवाभीष्टसिद्धावपि पच्यन्लिह्दुह्तन्प्रकृतिकण्यन्तात् क्विचि क्विपि णिलोपे तस्य स्थानिवद्भावेन पाक्तिः याष्टिः लेढिः दोग्धिः तगित्यादौ कुत्वषत्वटत्वघत्वसंय्योगादिलोपानापत्तिरिति वाच्यं, द्विर्वचनादिग्रहणप्रत्याख्यानपरभाष्येण फलैक्याय द्विर्वचनादिग्रहणस्य त्रिपादीशास्त्रमात्रोपलक्षकत्वात्, तस्य दोष इति वचनस्थाने संय्योगादिलोपलत्वणत्वेषु स्थानिवद्भावो नेति वचनस्यैव करणीयत्वाच्चैतदतिरिक्तत्रिपाद्युपलक्षकत्वाद्वा। ननु वेतस्शब्दात् ड्मतुपि डिति परे टिलोपे स्वादिष्विति पदत्वे पदान्तसकारस्य रुत्वापत्तिस्तस्मिन्न ल्लोपस्य स्थानिवत्त्वन्तु न पदचरमावयवरुत्वं प्रति साक्षात्प्रतिबन्धकत्वेन निषेधात् तसौमत्वर्थ इत्यनेन सान्तस्य भत्वमपि न तस्मिन् कर्त्तव्येऽल्लोपस्य स्थानिवत्त्वात् निषेधस्य तु भत्वं प्रति साक्षात्प्रतिबन्धकस्य तस्य पदचरमावयवरुत्वं प्रति साक्षात्ज्ञापकत्वप्रतिबन्धकत्वयोरभावेनाप्राप्तेरिति चेत्-न, पदे अन्तः पदान्त इति सप्तमीतत्पुरुषेण पदे परे योन्त

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तत्कर्म्मके विधावित्यर्थेन पदपरत्वाभावेन निषेधाप्राप्तेः स्थानिवद्भावेन सकारस्य पदान्तत्वाभावेन रुत्वाप्राप्तेः।

ननु शेखरे प्रत्यासत्त्या परपदस्थाजादेशस्यैव स्थानिवद्भावोऽनेन निषिध्यत इत्युक्तं तस्य किं फलम्? पदपरत्वाभावेनैव प्रकृतदोषवारण-सम्भवादिति चेत्-न्न, औपदेशिकनान्तध्रन्धातोर्ण्यन्तात् क्विपि णिलोपे सम्बोधने ध्राणिति ततः परमश्वशब्दप्रयोगे ध्राणश्व इत्यत्र णिलोपस्य क्विब्निमित्तस्य स्थानिवद्भावेन पदान्तस्येत्यनेन णत्वनिषेधो न भवति, तत्र पदपरकांन्तस्य णस्य निषेधप्रतिबन्धद्वारा प्रापको णिलोपस्थानिवद्भा-वोऽनेन निषिद्धस्स्यात् प्रत्यासत्त्या परपदस्थाजादेशस्थानिवद्भावस्यैवानेन निषेधे तु णिलोपस्य परपदस्थत्वाभावेन निषेधाप्राप्त्या दोषाभावात्। न चोक्तरीत्या परंपराप्रापकस्यानिषेधेन प्रत्यासत्त्याश्रयणमन्तरेणापि निषेधा-प्राप्त्या दोषाभाव इति वाच्यं, णत्वविधायके अपदान्तस्य मूर्धन्य इत्यधिकृत्य णग्रहणस्य पदान्तस्येतिनिषेधस्य च भाष्ये प्रत्याख्यातेनास्य स्थानिवद्भावस्य साक्षाण्णत्वप्रापकत्वात्, प्रत्यैषिषन् देवदत्ता इत्यत्र परादिवद्भावेनाभ्यस्तात्परस्य झेर्जुसोऽभावाय पञ्चमीसमासमाश्रित्येष्टस्य पररूपैकादेशस्थानिवद्भावस्य पदपरकपदान्तजस्कर्म्मकविधिप्रतिबन्धकस्य निषेधाभावाय प्रत्यासत्त्याश्रयणस्यावश्यकत्वाच्च। न चैतन्निषेधाप्राप्तावपि पूर्वत्रासिद्धे न स्थानिवदिति निषेधो दुर्वार इति वाच्यम्, पदे अन्त इति सप्तमीसमासमाश्रित्य स्थानिवत्त्वनिषेधव्यावृत्तिपरभाष्यप्रामाण्येन पूर्व-त्रासिद्धस्य पदचरमावयवविधायकातिरिक्तस्यैव ग्रहणेनादोषात्। न च पिपठिषतेरप्रत्ययेऽलोपे सकारस्य रुत्वे र्वोरिति दीर्घे पिपठीरित्यत्र रुत्वे कर्त्तव्ये अतो लोपो न स्थानिवत् पूर्वत्रासिद्धे न स्थानिवदिति निषेधादिति शेखरत्तो विरुद्धो रुत्वस्य पदचरमावयवत्वादिति वाच्यम्, तद्धितनिमित्त-काङ्गसंज्ञावदवयवपदचरमावयवभिन्नस्य त्रैपादिकस्य ग्रहणेनादोषात्। महिष्मानित्यत्रापि झलाञ्जशोन्त इति जश्त्वन्नाल्लोपस्य स्थानिवत्वादुक्त-रीत्या पूर्वत्रासिद्धे न स्थानिवदित्यस्याप्रवृत्तेर्न वा जश्त्वविधिं प्रति स्थानिवत्त्वनिषेधश्चरसाहचर्य्येण परनिमित्तकस्य झलाञ्जश्झशीति विहि-तस्यैव जश्त्वस्य तत्र ग्रहणात् पिपठीरित्यत्र कौ लुप्तमित्यनेन निर्वाहेऽपि गर्द्दभमाचष्टे गर्द्दभयति ततः क्विपि णिलोपे टिलोपस्य स्थानिवद्भाववारणाय तद्धितनिमित्तकेत्यादिनिवेशस्यावश्यकत्वं टिलोपस्य णिनिमित्तकत्वेन कौ लुप्तमित्यस्याप्रवृत्तेः।

ननु वेतस्वान् महिष्मानित्यत्रान्तरङ्गपरिभाषया रुत्वजश्त्वयोरन्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रङ्गयोः परनिमित्तकत्वेन बहिरङ्गस्यातो लोपस्यासिद्धत्वेनोपपत्तौ पदे परे इति पदचरमावयवातिरिक्तेत्यर्थकरणं व्यर्थमेवेति चेत्—न। कार्य्यकालपक्षेऽपि त्रिपाद्यामन्तरङ्गपरिभाषाया अप्रवृत्तेः शेखरे प्रतिपादितत्वात्।

ननु गामञ्चतीति क्विपि गतिकारकोपपदानामितिपरिभाषया सुबुत्पत्तेः प्रागेव समासे तृतीयान्तगोचेत्यादावचश्चेत्यल्लोपस्य स्थानिवद्भावेनावादेशापत्तिः परस्य पदत्वाभावात् पदे परे अन्तस्याभावेन निषेधावृत्तेरिति चेत्—न। गतिकारकेत्यस्यानित्यतया सुबुत्पत्त्युत्तरमेव समासात्। अत एव धनक्रीतेति सिध्यति। न चोत्तरपदत्व इति प्रत्ययलक्षणनिषेधेनापदत्वमेवेति वाच्यम्, उत्तरस्य पदत्वप्रयुक्तकार्य्ये एव तद्वार्त्तिकस्य प्रवृत्त्या प्रकृते तदभावेनाप्रवृत्तेः, कार्य्यित्वनिवेशादेव माषकुम्भवापेनेत्यस्य सिद्धिरित्यन्यत्र स्पष्टम्। पदे परे अन्तस्येत्यत्र पदपदस्य पदत्वयोग्यपरत्वाद्वा पदेऽन्तः पदान्त इति सप्तमीसमासपरभाष्यमेव पदत्वयोग्योपलक्षकत्वे प्रमाणमन्यथाऽत्र फलभेदापत्तेः। इदञ्च साक्षात् पदचरमावयवसाधकस्थानिवद्भावनिषेधस्योदाहरणम्। अचश्चेत्यस्य भसंज्ञानिमित्तकत्वेऽपि परनिमित्तकत्वाभावेन न स्थानिवद्भावप्रसक्तिरिति तु न वाच्यं, वव्रश्चेत्यत्रोरदत्वस्येवात्राप्यचश्चेत्यस्य परनिमित्तकत्वात्, परस्य सत्तां विना यस्य न प्रवृत्तिस्तस्य परनिमित्तकत्वस्वीकारात्, न पदान्तसूत्रे भाष्ये यद्यपि दीर्घग्रहणस्यापि प्रत्याख्यानमुक्तं, परन्तु शम्धातोर्णिजन्ताण्णिचि कर्मणि लुटि तासि प्रत्यये चिण्वद्भावे णिचो लोपे चिण्वद्भावसन्नियोगशिष्टे इटि च चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति दीर्घः प्रत्ययलक्षणेनैकं णिचमादाय विकल्पेन भवति, ततश्च शामिता शमितेति रूपद्वयम्भवति। तत्र प्रथमणिलोपस्य स्थानिवद्भावे तेन णिचा व्यवधानाच्चिण्परकणिपरकमितोऽभावेन दीर्घानापत्तिः दीर्घग्रहणाभावेन स्थानिवद्भावनिषेधस्य सापादिकत्वेन पूर्वत्रासिद्धेनेति वचनस्य चाप्राप्तेः णाविति जातिपरो निर्देश इति दीक्षितोक्तप्रकारस्तु न युक्तस्तत्रैव शेखरकृता खण्डितत्वात्। तस्मात् प्रत्याख्यानपरभाष्ये वरे यलोपस्वरवर्जमित्यत्र वर्ज्यकोटौ दीर्घोऽप्युपलक्षणीयस्तस्य न प्रत्याख्यानमिति यावत्।

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ८. अन्तादिवच्च ६।१।८५

अत्र पूर्वपरयोरित्यनुवृत्तमन्तादिभ्यां क्रमेण सम्बध्यते। एकमित्यनुवृत्तमेकादेशपरम्। अन्तादिशब्दौ चैकादेशस्थानिपरौ। पूर्वपरशब्दौ च तद्घटितसमुदायपरौ। एवं च पूर्वस्य परस्य च समुदायस्यान्तादिभ्यां वर्णाभ्यां तुल्यस्तत्स्थानिक एकादेशो भवतीत्यर्थः। ताभ्यां पृथगवस्थिताभ्यां पूर्वपरसमुदाये ये प्रातिपदिकत्वसुबन्तत्वप्रत्ययत्वादिव्यवहारास्ते एकादेशविशिष्टे पूर्वस्मिन् परस्मिन् समुदायेऽपि भवन्तीति यावत्। एकादेशे अन्तादिवर्णसादृश्यं पूर्वपरसमुदायवृत्त्युक्तधर्म्मवद्घटकत्वमेवेति तत्त्वम्। तद्वच्चेत्येव वक्तव्यन्तत्पदेन तयोरेवाद्यन्तयोः परामर्शस्स्यात्तथा च तयोराद्यन्तयोः पृथगवस्थितयोस्सतोस्तयोस्तद्घटितपूर्वसमुदायपरसमुदाययोश्च ये व्यवहारास्ते एकादेशे सति तस्मिन् तद्घटिते च स्युरित्यर्थस्स्यात्। ततश्चान्तादिवर्णमात्रवृत्तयोऽत्वादयस्तद्घटितसमुदायवृत्तयोऽदन्त्वादयश्च ये धर्म्मास्तेषामप्यतिदेशापत्तौ खट्वाभिरित्यादावदन्तत्वादीनामतिदेशापत्तौ भिस ऐस् स्यात् समुदायसाकाङ्क्षान्तादिशब्दोच्चारणे तु समुदायपर्य्याप्तधर्म्माणामेवातिदेशो न तु वर्णमात्रवृत्तीनामत्वादीनान्तदविनाभूतानामदन्तत्वादीनाञ्च तेषामप्यत्वातिदेशमन्तराऽतिदेशासम्भवात्। तेन खट्वाभिरित्यत्रादन्तत्वमादाय नैसादेशः। अत एव षत्वतुकोरसिद्ध इत्यनेन तुक्येकादेशस्यासिद्धत्वविधानं सार्थकमन्यथाऽधीत्येत्यत्रोपसर्गधात्वोरेकादेशस्य दीर्घस्य पूर्वान्तवद्भावेन ह्रस्वत्वमादाय तुक्सिद्धौ तद्व्यर्थमेव स्यादिति शेखरे।

वस्तुतस्तु दैवादिकादीङ्गतावित्यस्मात् क्त्वाल्यपि अधीयेत्यत्र पूर्वान्तवद्भावेन ह्रस्वत्वमादाय प्राप्तस्य तुको वारणायासिद्धत्वस्यावश्यकतया नैतन्मनोरमम्। ताद्रूप्यानतिदेशादित्यस्यापि वर्णमात्रवृत्तिधर्म्मानतिदेशादित्यर्थः। ननु रामावित्यादौ वृद्ध्यादेशस्यानेन सूत्रेण परादिवद्भावेन सुप्त्वान्मान्ते एकदेशविकृतन्यायेन प्रकृतित्वात्सुबन्ततदादित्वस्यार्थसमाजग्रस्तस्य सिद्धौ पदत्वसिद्ध्या रामौ गच्छत इत्यत्र तिङतिङ इतिनिपातसिद्धिरेतत्फलन्तत्तु न युक्तं, कार्य्यकालेऽतिदेशं विना सुबन्ततदादित्वाभावेन पदत्वाप्राप्तावपि यथोद्देशपक्षे एकादेशात्पूर्वजातपदत्वस्यानुमानिकस्थान्यादेशभावकल्पनया स्थानिवत्सूत्रेणैव पदत्वस्य सिद्धेर्व्यवस्थितपक्षद्वयेऽन्यतरेण लक्ष्यसिद्धौ पक्षान्तरेण दोषदानस्यानुचितत्वात्। न च यथोद्देशेऽपि नित्यत्वादेकादेश एव स्यात्पूर्वन्न पदत्वमिति वाच्यं, विरोधे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एव बाध्यबाधकभावेनैकादेशपदत्वयोरविरोधेन युगपत्प्रवृत्तावदोषात् । न च क्षीरपेणेत्यत्र सापादिकत्वात् पूर्वमिनादेशे गुणे क्षीरपेनेति स्थितौ णत्वन्न स्यादेकाजुत्तरपदघटितसमासावयवपूर्वपदावयवनिमितात्परस्य नस्य हि णत्वं विधीयते क्षीरपेनेति स्थितौ न समुदायस्य समासत्वं न क्षीरपे इत्यस्य न वा पे इत्यस्योत्तरपदत्वं पेत्यस्यैवोत्तरपदत्वात् स्थानिवद्भावस्यापि नावसरः श्रौतादेशस्य स्थानिनि वर्णद्वयात्मके उत्तरपदत्वाभावात् क्षीरप इनेत्यस्य स्थाने क्षीरपेनेत्यानुमानिकस्थान्यादेशभावेऽपि स्थानिनि क्षीरप इनेत्येतस्मिन् समासत्वाभावात् क्षीरप इत्यस्य स्थाने क्षीरपे इत्यादेश इत्यपि न श्रौतस्थानिघटितस्यैवानुमानिकस्थानित्वादकारेकारयोर्मिलितयोरेव श्रौतस्थानित्वात् न क्षीरपेत्यस्य तद्घटितत्वात् सत्येतस्मिन् सूत्रे पूर्वान्तवद्भावेन पे इत्यस्योत्तरपदत्वं सुलभम् । न च नैतदपि फलमुत्तरपदत्वस्याशास्त्रीयत्वादेकाजुत्तरपदत्वस्य शास्त्रीयघटितत्वेन शास्त्रीयत्वेऽपि वर्णत्वव्याप्याच्त्वघटितत्वेनादन्तत्वादिवत्ताद्रूप्यत्वात् । न चैकदेशविकृतन्यायेन पेत्यस्य यदुत्तरपदत्वन्तत्पेशब्दे आनीय निर्वाह इति वाच्यमर्द्धाधिकस्य विकृतत्वात् । न च क्षीरपशब्दे यदेकाजुत्तरपदघटितसमासत्वन्तदुक्तन्यायेन क्षीरपे शब्दे आनीयत इति नार्धविकार इति वाच्यमेकारस्योभयादेशत्वेन तदेकदेशमात्रस्य विकाराभावात् पूर्वैषुकामसम इत्यत्रत्यभाष्यप्रामाण्येन मात्रपदनिवेशस्यावश्यकत्वादिति परिभाषेन्दुशेखरे स्पष्टम् । न च नैतदर्थमन्तादिवच्चेत्यस्यावश्यकता एकादेशस्य पूर्वस्थानिघटितपूर्वसमुदाये परस्थानिघटितपरसमुदाये च प्रत्येकं स्थानित्वपर्य्याप्तिरेकादेशघटिते चादेशत्वपर्य्याप्तिरानुमानिकस्थान्यादेशकल्पनस्थलेऽङ्गीक्रियते एतत्सूत्रानुरोधात् । तथा च क्षीरप इन इत्यस्य स्थाने क्षीरपेनेत्यादेश इत्यानुमानिके स्थान्यादेशभावे क्षीरपशब्दे स्थानितापर्य्याप्तिरिन्शब्दे च स्थानितापर्य्याप्तिरादेशता च क्षीरपेनशब्दे इति स्थिते एकाजुत्तरपदघटितसमासत्वं स्थानिवद्भावेन क्षीरपेनशब्दे स्थानिवत्सूत्रेणानीय णत्वोपपत्तेरिति वाच्यम्, अच्त्वघटितत्वेन विशेषणतयाऽलाश्रयणात् । यदि च प्रत्येकं स्थानित्वपर्य्याप्तिवदादेशत्वमपि श्रौतादेशघटिते स्थान्यन्तरतमे एव कल्प्यते, ततश्च क्षीरपेनेत्यत्र क्षीरपशब्दस्य क्षीरपे आदेश इनेत्यस्य नेत्यादेशः, इनेत्यस्य एनादेशः, क्षीरपेत्यस्य क्षीरप इत्यादेश इति वा कल्प्यते । एवं पेत्यस्य पे आदेश इनेत्यस्य नेत्यादेश इति च कल्पयितुं शक्यते । ततश्च क्षीरपशब्दगतं समासत्वं क्षीरपे शब्दे आनीयते । पशब्दगतमुत्तरपदत्वं पेशब्दे आनीयते, तस्यैकाच्त्वं स्वत एवास्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रीरपेशब्दे चैकाजुत्तरपदघटितसमासत्वमार्थसमाजग्रस्तमित्यन्तादिवच्चेति सूत्रं विनापि णत्वसिद्धिः। न चाशास्त्रीयत्वान्नोत्तरपदत्वमतिदेष्टुं शक्यते, स्थानिवत्सूत्रेण शास्त्रस्थपदसंकेतितावच्छेदकं हि शास्त्रीयमिति वाच्यं, शास्त्रस्थपदशक्यतावच्छेदकस्यैव शास्त्रीयत्वाभ्युपगमेनादोषादित्युच्यते तदा नैतत् फलम्। एवममी इत्यपि फलन्न, अत्र ह्यदश्शब्दाज्जसि त्यदाद्यत्वे श्यादेशे गुणे अदेशब्दे एत ईद्बहुवचने इत्येतत्प्रवृत्त्यर्थमदश्शब्दत्वमानेयं तच्चान्तवद्भावाधीनं स्थानिवत्सूत्रेण नानेतुं शक्यं श्रौतस्थानित्वमकारे-कारयोरानुमानिकस्थानित्वमद इ इति समुदायस्योभयत्र नादश्शब्दत्वं, यत्रादश्शब्दत्वं न तत्र स्थानित्वपर्य्याप्तिरिति फलं वक्तव्यं, तन्नैकादेशपूर्व-स्थानिघटितपूर्वसमुदायेऽपि स्थानित्वपर्य्याप्त्यभ्युपगमेन स्थानिवत्सूत्रेणैव निर्वाहात्। यदपि भियो हेतुभये षुगितिसूत्रे भी ई भिस्तस्य भीय इत्यत्रैका-देशविशिष्टे धातुत्वमानेयमीयङर्थन्तच्चान्तवद्भावमन्तरा न सम्भवतीति सूत्रमावश्यकमिति शेखरे उक्तम्, तदपि न युक्तम्, भी ई इत्यस्य स्थाने भी इत्यादेश इत्यानुमानिकस्थान्यादेशभावमाश्रित्य निर्वाहसम्भवात्। एकादेशपूर्वस्थानिघटिते पूर्वस्मिन् भीसमुदाये स्थानित्वपर्य्याप्त्यभ्युपगमेन स्थानिवत्सूत्रेणैव भी इत्यत्र धातुत्वातिदेशसम्भवात्। यदपि प्रत्येकमेकादेशस्थानिघटिते पूर्वस्मिन् परस्मिँश्च समुदाये स्थानित्व-पर्य्याप्त्यभ्युपगमे स्व अश्व इत्यस्य स्थाने स्वाश्व इत्यादेश इत्यानुमानि-कस्थान्यादेशभावे पूर्वसमुदायस्वशब्दगतं स्वशब्दत्वं स्वाश्वशब्दे आनुमानिकादेशे स्थानिवद्भावेनादायेरिन्शब्दयोगे स्वादीरेरीति वृद्ध्यापत्तिरूपन्दूषणमुक्तं शेखरकृता, तदपि न। यथा स्थानितापर्य्याप्ति-स्समुदायद्वये तथाऽऽदेशत्वमपि श्रौतादेशघटिते पूर्वसमुदायरूपस्थान्यन्त-रतमे समुदाये पूर्वसमुदायनिष्ठस्थानितानिरूपितं परसमुदायरूपस्थान्यन्त-रतमे श्रौतादेशघटिते समुदाये परसमुदायनिष्ठस्थानितानिरूपितमभ्युपेयते। ततश्च स्वशब्दस्य स्वा आदेशः, अश्वशब्दस्य आश्व आदेशः, स्वअश्व-शब्दस्य स्वाश्व आदेश इति कल्पनात्रयम्। ततश्च स्थानिवद्भावेन स्वशब्द-त्वं स्वाशब्दे, अश्वशब्दत्वं आश्वशब्दे, स्वअश्वशब्दत्वं स्वाश्वशब्दे एव स्यान्न तु स्वाश्वशब्दे। स्वशब्दत्वमान्तरतम्यञ्च स्वघटकश्रौतस्थानीतरया-वद्वर्णघटितत्वविशिष्टस्वाघटकश्रौतादेशेतरवर्णाघटितत्वरूपेणेत्यदोषात्। यदप्यभीयादित्यस्यासिद्धिरित्युक्तं, तदप्यसमञ्जसमेव। अभि-इ-इत्यस्य स्थाने अभी इत्यानुमानिके स्थान्यादेशभावे अभीत्यस्य पूर्वसमुदायस्य स्थानित्वाभ्युपगमेन स्थानिवत्सूत्रेणाभीत्यानुमानिकादेशस्योपसर्गत्वेऽपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततः परस्येणोऽभावेन ह्रस्वाप्रवृत्तेः। न च परस्थानिभूतस्येकारस्योपसर्गात्परत्वेणत्वयोस्सत्वेन स्थानिवत्सूत्रेणैकारे दीर्घे तयोरतिदेशेन ह्रस्वापत्तिः प्रत्येकं स्थानित्वस्वीकारे स्यादिति शेखराशय इति वाच्यम्, वर्णसन्निवेशसापेक्षस्य पूर्वत्वादेरतिदेशसहस्रेणाप्यतिदेष्टुमशक्यत्वात्। नपदान्तसूत्रे शब्दरत्ने स्पष्टमेतत्। एकदेशविकृतन्यायेनाभीत्यस्योपसर्गत्वमादाय ह्रस्वापत्तेस्तूपसर्गत्वस्याक्तपरिमाणतया न्यायाप्रवृत्त्या वारणम्। अनित्यतयाऽचः परस्मिन्निति स्थानिवद्भावेन चोक्तन्यायेन पदत्वमादाय जश्त्वापत्तिरपि न नपदान्तेति निषेधस्तु परपदस्थाज्मात्रस्थानिकाजादेशविषयोऽत एव घटानयनमित्यत्र जश्त्वन्नेत्यपि वोध्यमिति स्थानिवत्सूत्रेण गतार्थमिदं सूत्रमिति मनोरमोक्तमेव युक्तमिति दिक्॥

---

## ९. यथासङ्ख्यमनुदेशः समानाम् १।३।१०

समानामिति सर्वपर्य्यायस्यैव सर्वादिगणे पाठात्सदृशपर्य्यायेऽत्र न सुट्। सादृश्यञ्चात्र समानसंख्यावत्त्वेनैव बोध्यम्। कर्मणि षष्ठी विधानार्थकानुदेशयोगादिति तु न विधेयानामुद्देश्यसमसङ्ख्यकत्वे यवलपरे यवला वेत्यत्र समकर्म्मकविधानसद्भावेन सूत्रसार्थक्येऽप्यनुवाद्ये समूलाकृतिजीवेषु हन्कृञ्ग्रह् इत्यादावप्रवृत्त्यापत्तेः। तस्मात्समानामित्यत्र प्रतियोगित्वनिरूपकत्वरूपे सम्बन्धे षष्ठी। तस्य चानुदेशपदार्थे अनुप्रतियोग्यनुयोगिभ्यां पश्चात् दिश्यते ज्ञायते इति व्युत्पत्तिलभ्ये सम्बन्धेऽन्वयः। सङ्ख्यामनतिक्रम्य यथासंख्यं सङ्ख्याशब्दार्थः। क्रमः प्रथमत्वद्वितीयत्वादिरूपो भवतीति शेषः। समानां सम्बन्ध इत्यनेनैव सम्बन्धस्य प्रतियोगित्वेन विवक्षितानामनुयोगित्वेन विवक्षितानाञ्च समानसङ्ख्यावत्त्वं लभ्यते। तथा च समुदायविशिष्टोऽनुदेशस्सम्बन्धो यथासङ्ख्यम्भवतीति वाक्यार्थः। सम्बन्धे समुदायवैशिष्ट्यञ्च स्वघटकपदार्थप्रतियोगिकत्व-स्वविशिष्टसमुदायघटकपदार्थानुयोगिकत्वोभयसम्बन्धेन। सम्बन्धघटकवैशिष्ट्यं स्वघटकयावत्पदार्थपर्य्याप्तसङ्ख्यासमानसङ्ख्यावद्यावत्पदार्थघटितत्वसम्बन्धेन। इदमुद्देश्यदलम्। विधेयदलं यथासङ्ख्यमिति। तस्य च सङ्ख्यामनतिक्रम्य भवतीत्यर्थस्सङ्ख्यामनतिक्रम्य भवनञ्च सम्बन्धे स्वप्रतियोगिनिष्ठक्रमसजातीक्रमवदनुयोगिकत्वरूपम्। सङ्ख्यातिक्रमणञ्च स्वप्रतियोगिनिष्ठक्रमविजातीयक्रमवदनुयोगिकत्वं, तन्न भवतीति यावत्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्रमश्च यत्किञ्चित्समुदायपर्य्याप्तसङ्ख्याप्रयोजकापेक्षाबुद्धीयसङ्ख्यानिष्ठप्रकारतानिरूपितविशेष्यतारूपः। यथा प्रथमाद्वितीयातृतीयाचतुर्थीपञ्चमीषष्ठीसप्तमीत्येतत्समुदायपर्य्याप्ता सप्तत्वसङ्ख्या तत्प्रयोजिका अपेक्षाबुद्धय*:, प्रथमा एका प्रथमैकविशिष्टा द्वितीया एकेति, इमे प्रथमाद्वितीये द्वे इति द्वित्वोत्पादिका अपेक्षाबुद्धिः, इमे द्वे एतद्द्विविशिष्टा तृतीया एकेति, इमाः प्रथमाद्वितीयातृतीयास्तिस्र इति त्रित्वोत्पादिका अपेक्षाबुद्धिः, इमास्तिस्रः एतत्त्रिविशिष्टा चतुर्थी एकेति, इमाश्चतस्र इति चतुष्ट्वसङ्ख्योत्पादिका अपेक्षाबुद्धिः, इमाश्चतस्रः एतच्चतुर्विशिष्टा पञ्चमी एकेति, इमाः पञ्च इति पञ्चत्वसङ्ख्योत्पादिका अपेक्षाबुद्धिः, इमाः पञ्च एतत्पञ्चविशिष्टा षष्ठी एकेति, इमाः षट् इति षट्त्वसंख्योत्पादिका अपेक्षाबुद्धिः, इमाः षट् एतत् षट्विशिष्टा सप्तमी एकेति, इमाः सप्त इति सप्तत्वसङ्ख्योत्पादिका अपेक्षाबुद्धिः। इमास्सर्व्वा अपेक्षाबुद्धयः सप्तत्वसङ्ख्याप्रयोजिकास्तदीयैकत्वसङ्ख्यानिष्ठप्रकारतानिरूपिताविशेष्यता प्रथमाद्वितीयादिनिष्ठेति सप्तसु प्रथमादिषु क्रमः प्रथमत्वञ्च यादृशसमुदायनिरूपितं प्रथमत्वं विवक्षितन्तादृशसमुदायपर्य्याप्तसङ्ख्याप्रयोजकापेक्षाबुद्धीयसङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्यानवच्छिन्नविशेष्यताश्रयत्वम्। तच्च प्रकृते प्रथमाया एव एकत्वनिष्ठप्रकारतानिरूपितसङ्ख्यानवच्छिन्नविशेष्यताश्रयत्वात्। द्वितीयायास्तु एकत्वसङ्ख्यावच्छिन्नविशेष्यताश्रयत्वात्त न प्रथमत्वं, मिलितयोस्तु प्रथमाद्वितीययोर्द्वित्वसङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्यानवच्छिन्नविशेष्यताश्रयत्वेन प्रथमत्वमिष्यत एव। अत एवास्यां पङ्क्तौ प्रथमे त्रयः पण्डिता इति त्रिषु पर्य्याप्तं, प्रथमत्वं प्रथमयोः पूर्वसवर्ण इत्यत्र प्रथमपदेन प्रथमाद्वितीययोर्ग्रहणम्। अत्र प्रथमापदे आवृत्तिरेकं प्रथमापदं द्वितीयापरमिति व्याख्यानन्तु हेयमेव प्रामाणिकेषु ग्रन्थेष्वनुक्तेः। एवं प्रथमद्वितीयतृतीयादिष्वपि बोध्यम्। एवं द्वितीयत्वं द्वित्वसङ्ख्योत्पादकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वावच्छिन्नविशेष्यताश्रयत्वम्। तच्च द्वितीयस्यैव। एवं तृतीयत्वं त्रित्वसङ्ख्योत्पाद-

---

*अपेक्षाबुद्धिजन्यद्वित्वादिप्रक्रियाविचारो यथा लक्षणावल्यामुदयनाचार्य्यः—

आदाविन्द्रियसन्निकर्षघटनादेकत्वसामान्यधी-
रेकत्वोभयगोचरामतिरतो द्वित्वं ततो जायते।
तस्मात् द्वित्वमतिस्ततोऽनुपरतो द्वित्वप्रमानन्तरं
द्वे द्रव्ये इति धीरियं निगदिता द्वित्वाश्रया प्रक्रिया॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri.

कापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितद्वित्वावच्छिन्नविशेष्यताश्रयत्वम्। एवं क्रमेणैव चतुर्थत्वादिकमपि बोध्यम्। एवमेव समूलाकृतिजीवादिसमुदायनिरूपितः क्रमः प्रथमत्वादिकञ्च बोध्यम्। समूले उपपदे हन्धातोरेवाकृत्युपपदे कृञ एव जीवे उपपदे ग्रह्धातोरेव प्रत्ययः समूलक्रमसाजात्यं हन्क्रमे एव आकृतिक्रमसाजात्यं कृञ्क्रम एवेति तयोरेव सम्बन्धे क्रमानतिक्रमो न समूलकृञोस्सम्बन्धे तयोः क्रमयोर्विजातीयत्वेन क्रमातिक्रम एव स्यात्। साजात्यञ्च सङ्ख्यानवच्छिन्नत्व-सङ्ख्यात्वव्याप्यत्किञ्चिद्धर्म्माश्रयसङ्ख्यावच्छिन्नत्वान्यतररूपेण प्रथमत्वरूपे आद्यधर्म्मेण द्वितीयत्वादिरूपे क्रमे द्वितीयधर्म्मेण बोध्यम्।

ननु यदा समूलमेकम्, आकृतिरेका, जीव एक इति समूलाकृतिजीवास्त्रय इत्येवं क्रमेणैवापेक्षाबुद्ध्या त्रित्वमुत्पन्नन्तदा समूलाकृतिजीवसमुदायपर्य्याप्तत्रित्वसङ्ख्योत्पादकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितं विशेष्यतात्रयमेव सङ्ख्यानवच्छिन्नमिति त्रिषु प्रथमत्वापत्तिरेवं त्रित्वसङ्ख्योत्पादिकाऽपेक्षाबुद्धिस्सैव तदीयैकत्वनिष्ठप्रकारतानिरूपिता कापि विशेष्यता द्वित्वावच्छिन्ना नास्तीति न कुत्रापि तृतीयत्वमेवमत्रैव द्वित्वोत्पादकापेक्षाबुद्ध्यभावेन द्वित्वोत्पादकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वावच्छिन्नविशेष्यताया अभावेन नाकृतेर्द्वितीयत्वमितिरीत्या सर्वत्रैवाव्याप्त्यतिव्याप्तिसद्भावान्नेयं व्यवस्था युक्तेति चेत्—

अत्रोच्यते—यत्र पूर्व्वसङ्ख्यानवच्छिन्नविशेष्यताकैवायमेकोऽयमेकोऽयमेक इत्याद्याकारापेक्षाबुद्धिस्तत्र त्रित्वादिकं नोत्पद्यते किन्तु बहुत्वमेव। यत्र पूर्व्वसङ्ख्यावच्छिन्नविशेष्यताकाऽपेक्षाबुद्धिर्यथा अयमेकः एतदेकविशिष्टोऽयमेक इत्याकारा इमौ द्वौ एतद्द्विविशिष्टोऽयमेक इत्याद्याकारा वा तत्रैव द्वित्वत्रित्वोत्पत्तिरिति पूर्वोक्तापेक्षाबुद्धेस्त्रित्वानुत्पादकत्वेन न तामादाय दोषोऽन्यथा क्व बहुत्वोत्पत्तिः, क्व त्रित्वाद्युत्पत्तिरित्यव्यवस्थैव स्यादिति गुरुचरणाः।

केचित्तु "अनेकैकत्वबुद्धिर्य्या साऽपेक्षाबुद्धिरिष्यत" * इति कारिकाऽनुरोधादेकत्वमात्रावगाहिनी अयमेकोऽयमेकोऽयमेक इत्यपेक्षाबुद्धिरपि त्रित्वोत्पादिका। किञ्च पूर्व्वसङ्ख्यावच्छिन्नविशेष्यताकैवापेक्षाबुद्धिर्य्युत्तरसङ्ख्योत्पादिका तदा अयमेकोऽयमेक इत्यपेक्षाबुद्ध्या द्वित्वोत्पत्तिर्न्न स्यात्। त्रित्वादिस्थले बहुत्ववदत्र कस्याप्युत्पाद्यस्याभावेनेष्टापत्त्य-

---

* भाषापरिच्छेदे १०९ कारिकायां विश्वनाथः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावात्, अवधानविशेषस्यापि त्रित्वाद्युत्पत्तौ हेतुत्वोपगमेन व्यवस्थासम्भवाच्चेत्याहुः ।

तन्मते प्रथमत्वादिकमन्यदेव वक्तव्यम् । तथा हि—तत्समुदायनिरूपितं प्रथमत्वन्तत्समुदायविशिष्टत्वं, वैशिष्ट्यञ्च स्वारम्भकत्वस्वारम्भकानुत्तरत्वोभयसम्बन्धेन । द्वितीयादावतिव्याप्तिवारणाय द्वितीयस्सम्बन्धः । उदासीनेऽतिव्याप्तिवारणायाद्यस्सम्बन्धः । द्वितीयत्वञ्च स्वारम्भकत्वस्वारम्भकप्रथमाव्यवहितोत्तरत्वोभयसम्बन्धेन तत्समुदायविशिष्टत्वम् । एवं तृतीयत्वादिकमपि स्वारम्भकत्वस्वारम्भकद्वितीयाऽव्यवहितोत्तरत्वोभयसम्बन्धेन समुदायविशिष्टत्वादिकमेव । क्रमत्वञ्चारम्भकत्वमेव ।

नन्वेवं प्रथमद्वितीयोभयात्मकसमुदायस्य प्रथमत्वव्यवहारो न स्यादुभयात्मकसमुदायस्यारम्भकत्वाभावादिति चेत्-न । स्वारम्भकत्वेत्यस्य स्थाने स्वारम्भकघटितत्वस्य दानेनादोषात् । प्रथमत्वरूपक्रमसाजात्यं प्रथमत्वरूपे क्रमे उत्तरत्वाघटितत्वरूपेण द्वितीयत्वादिरूपक्रमसाजात्यं द्वितीयत्वादौ क्रमे प्रथमघटितत्वद्वितीयघटितत्वाद्यन्यतमरूपेण समन्वयस्सुगमः ।

यद्वा यथासङ्ख्यमित्यत्र सङ्ख्यापदं सङ्ख्यापरमेव । सम्बन्धे सङ्ख्यानतिक्रमश्च स्वप्रतियोगिविशिष्टसङ्ख्यासजातीयसङ्ख्याविशिष्टानुयोगिकत्वमेव । प्रतियोगिवैशिष्ट्यञ्च सङ्ख्यायां स्ववृत्तित्वस्वपूर्य्यमाणत्वान्यतरसम्बन्धेन । प्रथमप्रतियोगिवैशिष्ट्यं वृत्तित्वसम्बन्धेनैकत्वसङ्ख्यायां द्वितीयादिप्रतियोगिवैशिष्ट्यं द्वित्वादिसङ्ख्यायां स्वपूर्य्यमाणत्वसम्बन्धेन । अग्रे सङ्ख्यावैशिष्ट्यमनुयोगिनि स्वाश्रयत्वस्वपूरकत्वान्यतरसम्बन्धेन । प्रथमे अनुयोगिनि एकत्वसङ्ख्यायाः स्वाश्रयत्वं सम्बन्धः । द्वितीयाद्यनुयोगिनि द्वित्वादिसङ्ख्या, वैशिष्ट्यं स्वपूरकत्वसम्बन्धेन । सङ्ख्यासाजात्यञ्च सङ्ख्यायां संख्यात्वव्याप्ययत्किञ्चिज्जातिमत्त्वेन प्रथमे एकत्वत्वेन द्वितीये द्वित्वत्वादिनेति विवेकः ।

यद्यपि 'शत्रुं मित्रं विपत्तिञ्च जय रञ्जय भञ्जये' त्यादाविव स्थानाख्यलौकिकप्रमाणेनैव समसङ्ख्यकानां क्रमेणान्वयोपपत्तिस्तथापि यस्य सूत्रस्य वाक्यार्थबोधे क्रमेणान्वयो विवक्षितस्तस्मिन् सूत्रे यत्र समुदायो नोपात्तः किन्तु समुदायबोधकमेकमेव पदन्तत्र शास्त्रान्तरस्य समुदायमादायापि यथासङ्ख्यान्वयलाभार्थं यथासङ्ख्यसूत्रम् । यथा एचोऽयवायाव इत्यादौ । किञ्चाद्यन्तौ टकिताविव्यत्र समूलाकृतिजीवेषु हन्कृञ्ग्रह इत्यादौ साहित्ये एव द्वन्द्वविधानान्मिलितानामेकरूपेणैकस्मिन्नन्वयविवक्षाया एव साहित्यपदार्थतया द्वन्द्वसाधुत्वोपपत्तये समुदायस्य समु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दाये एवान्वयो वक्तव्यः। क्रमेणान्वये द्वन्द्वस्यासाधुत्वं स्यादेतत्सूत्रारम्भ-सामर्थ्यात् क्रमेणान्वयबोधोपयोगिद्वन्द्वरहितं वाक्यं कल्पयित्वाऽनेन यथासङ्ख्यान्वयः कर्त्तव्यः। स एव बोधो लक्ष्यसाधुत्वोपयोगीति बोध्यम्।

वस्तुतस्तु धवखदिरौ छिन्धीत्यादावपि धवखदिरयोर्नैकत्रान्वयोऽव-यवविभागरूपच्छेदनस्य धवादिभेदेन भिन्नत्वादपि त्वेकच्छेदनत्वधर्म्मा-वच्छिन्ने अन्वय इत्येव तदनुरोधेन मिलितानामेकधर्म्मावच्छिन्नेऽन्वय-विवक्षैव सहविवक्षा वक्तव्या। ततश्चाद्यन्तयोष्टिति किति च भिन्ने एव पदार्थे उभयत्वरूपैकधर्म्मावच्छिन्नेऽन्वय इति न क्रमेणान्वयानुरोधेन वाक्यान्तरकल्पनावश्यकतेति बोध्यम्। यत्र समानामपि यथासङ्ख्या-न्वयो न विवक्ष्यते तत्र कौमुद्यामुक्तमत्र यथासङ्ख्यन्नेष्यत इति तत्रैतत्सू-त्राप्रवृत्त्यर्थमुद्देश्यकोटौ स्वरितत्वं प्रवेश्य स्वरितत्वविशिष्टसमसङ्ख्यकानां सम्बन्धो यथासङ्ख्यं भवतीत्यर्थः कर्त्तव्यः। तत्र तत्रैतत्प्रवृत्तिस्थले स्वरितत्वं प्रतिज्ञेयं यत्र नेष्यते तत्र न स्वरितत्वप्रतिज्ञेति नैतत्सूत्रप्रवृत्ति-रिति बोध्यम्॥

---

## १०. ङमो ह्रस्वादचि ङमुड् नित्यम् ८। ३। ३२

अत्र ह्रस्वात्परो यो ङम् तदन्तं यत्पदं ततः परस्याचो ङमुडित्यर्थः। परमश्चासौ दण्डी परमदण्डी, द्विवचने परमदण्डिनावित्यादावुत्तरस्य दण्डिन्नित्यस्य प्रत्ययलक्षणेन पदत्वमादाय ततः परस्याच औ इत्यस्य ङमुट् प्राप्तो न भवत्युत्तरपदत्व इति प्रत्ययलक्षणनिषेधादत एवात्र न-लोपो न प्रकृतसूत्रे भाष्येऽपि तेन निषेधेन सिद्ध इत्युक्तमिति प्राचीनाः।

शेखरकृत्तु उभि च पद इत्यस्मात्पद इत्यनुवर्त्त्याचीत्यत्र तदादि-विधावजादेः पदस्य ङमुडित्यर्थेन परमदण्डिनावित्यादावावित्यस्य पद-त्वाभावेन ङमुडभावः।उत्तरपदत्व इति निषेधस्तु न युक्तो वार्त्तिके उत्तरेति लुप्तषष्ठीकं पृथक्पदन्तच्चोत्तरपदे लाक्षणिकं पदत्व इत्यस्य पदत्वप्रयुक्त-कार्य्ये इत्यर्थस्तथा चोत्तरपदस्य पदत्वप्रयुक्ते कार्य्ये कर्त्तव्ये प्रत्ययलक्ष-णन्नेति वार्त्तिकार्थः। प्रकृते उत्तरपदस्य दण्डिन्नित्यस्य पदत्वप्रयुक्तङमु-ट्कार्य्यस्याभावात्,नलोपार्थं प्रत्ययलक्षणन्तु नानेन निषेधात्।पदत्वप्र-युक्तनलोपकार्य्यस्योत्तरपदे दण्डिन्नित्यत्र कर्त्तव्यत्वात्। कार्य्यित्वनिवे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शादेव माषकुम्भवापेनेत्यादौ माषाणां कुम्भो माषकुम्भस्तस्य वापो माषकुम्भवापस्तेनेत्यर्थके प्रत्ययलक्षणेन कुम्भेत्यस्य पदत्वेन तेन व्यवाये पदव्यवायेनेति णत्वनिषेधसिद्धिरन्यथोत्तरपदत्वमिति प्रत्ययलक्षणनिषेधेन णत्वनिषेधानापत्तिः। मम तु कुम्भेत्यस्य पदत्वप्रयुक्तकार्य्याभावेन वार्त्तिकाप्रवृत्तिरिति न दोषः। तेन निषेधेन सिद्ध इति प्रकृतिसूत्रस्थं भाष्यं त्वेकदेशिन एवेत्याह।

अत्रैव प्रसङ्गाद्वार्त्तिकार्थो विचार्य्यते—उत्तरपदस्य पदत्व इत्यर्थे आर्द्रं चर्म्मेत्यादौ चर्म्मेत्यत्र प्रत्ययलक्षणन्न स्यादिति नाशङ्क्यमुत्तरपदेन समासचरमावयवस्य ग्रहणादस्य चातथात्वात्। नन्वेवमत्रेरपत्यानि मधोरपत्यानीत्यर्थे यञञोश्चेति यञञोर्लुकि तद्धितान्तत्वात्प्रातिपदिकत्वेन तदवयवसुपो लुकि जसि अत्रयः मधव इत्यादौ जसि चेति गुणे प्रत्ययलक्षणेन पदत्वादेङः पदान्तादतीति पूर्वरूपापत्तिः। निषेधस्तु न समासचरमाययवत्वाभावादिति चेन्नोत्तरपदस्य वृत्तिचरमावयवपरत्वेन तद्धितवृत्तेरत्र सत्त्वेनादोषात्। नन्वेवमपि पूर्वं दण्डी प्रियो यस्येति त्रिपदे बहुव्रीहावुत्तरपदे परे पूर्वदण्डिन्नित्यस्य तद्धितार्थोत्तरपदसमाहारे चेति तत्पुरुषे दण्डिन्नित्यस्यापि तत्पुरुषरूपवृत्तिचरमावयवत्वेन तस्य पदत्वप्रयुक्ते नलोपे कर्त्तव्ये प्रत्ययलक्षणनिषेधेन नलोपानापत्तिरिति चेत्—न। वृत्तिचरमावयवस्य मध्यमपदत्वानाक्रान्तस्यैव ग्रहणेन प्रकृते च दण्डिन्नित्यस्य मध्यमपदत्वाक्रान्तत्वेन निषेधाप्रवृत्तेः। ननु वृत्तिचरमावयवस्यैवोत्तरपदत्वे पञ्चगवधन इत्यत्र समासान्तप्रत्ययस्यैव वृत्तिचरमावयवत्वेन गोपदस्य तत्पुरुषवृत्तिचरमावयवत्वस्याप्यभावेन निषेधाप्रवृत्त्या प्रत्ययलक्षणेन पदत्वेनावङाद्यादेशापत्तिरिति चेत्—न; वृत्तिविशिष्टस्यैव वृत्तिचरमावयवपदेन ग्रहणात्। वृत्तिवैशिष्ट्यञ्च स्वघटकत्वस्वारम्भकपदपूर्वत्वाभाववत्त्वोभयसम्बन्धेन। पञ्चगवधन इत्यत्र तत्पुरुषरूपवृत्तिवैशिष्ट्यं वर्त्तते गोशब्दस्य; तस्य टचः पूर्वत्वेऽपि पदपूर्वत्वाभावात् धनपदस्य तत्पुरुषवृत्त्यारम्भकपदत्वाभावाच्च। न चैवमपि पञ्चधनयोर्मध्ये एव सत्त्वेन गो इत्यस्य मध्यमपदत्वाक्रान्तत्वमेवेति न निषेधप्रवृत्तिरिति दोष एवेति वाच्यम्, वृत्तिविशिष्टत्वस्यैव मध्यमपदत्वाक्रान्तत्वपदार्थत्वेनादोषात्। वैशिष्ट्यञ्च स्वारम्भकोत्तरत्वस्वारम्भकपदाव्यवहितपूर्वत्वोभयसम्बन्धेन। टचा व्यवधानेन पदाव्यवहितपूर्वत्वाभावेन मध्यमपदत्वानाक्रान्तत्वात्।

वस्तुतस्तु पूर्वदण्डिप्रिय इत्यादौ पूर्वदण्डिन्नित्यत्र वृत्तिपर्य्याप्तिर्नास्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मानाभावात् । ससुदाये या वृत्तिस्तस्या एवापर्य्याप्त्या पूर्वदण्डिन्नित्यत्र सत्त्वेनोत्तरपदे परे समासविधानसामर्थ्येनापर्य्याप्ताया अपि वृत्तेस्समासप्रयोजकत्वाभ्युपगमेन च तत्पुरुषोपपत्तेः । एवञ्च दण्डिन्नित्यस्योत्तरपदत्वाभावेन निषेधाप्रवृत्तेर्मध्यमपदत्वानाक्रान्तत्वनिवेशो निरर्थकः । न चैवं सति पंचगवधन इत्यत्रापि निषेधाप्रवृत्तौ पदत्वेनावङापत्तिरिति वाच्यम् । पञ्चगवधनेतिसमुदायवृत्तिमादायैवोत्तरपदत्वस्य धने सत्त्वेनादोषात्, वृत्तिविशिष्टत्वमेव ह्युत्तरपदत्वम् । वैशिष्ट्यञ्च स्वारम्भकत्वस्वारम्भकपदाव्यवहितपूर्वत्वाभाववत्त्वोभयसम्बन्धेन । प्रकृते टचा व्यवहितत्वेनाव्यवहितपूर्वत्वाभावसत्त्वेनादोषात् । उत्तरपदस्य वृत्तिचरमावयवपरत्वादेव बहुवाचौ बहुसेचावित्यादिसिद्धौ बहुच्पूर्वस्य च पदादिविधावेव प्रत्ययलक्षणमिति वचनान्तरं नारम्भणीयन्तत्रापि तद्धितवृत्तेस्सत्त्वात्, उत्तरपदादिः वर्णो वर्णलक्षणादित्यत्रानेन निषेधादुत्तरपदत्वमसम्भवीति न वाच्यन्तत्रोत्तरपदशब्दस्य समासचरमावयवपरत्वेन प्रत्ययलक्षणाभावेऽप्यदोषात् ।

ननु माषकुम्भवापेनेति कार्य्यित्वनिवेशस्य फलन्न युक्तम् । तथा हि—आर्द्रगोमयेणेत्यत्र पदव्यवायेऽपीत्यनेन गोरूपपदव्यवायात् प्राप्तस्य निषेधस्याभावायातद्धित इति वाच्यमिति वार्त्तिकं वार्त्तिककृता आरब्धन्तस्य व्यवधायकपदस्य तद्धितपरत्वे सति न निषेध इति तदर्थः । भाष्यकृता च पदे व्यवाय इति सप्तमीतत्पुरुषं पदव्यवायेऽपीत्यत्राश्रित्य पदपरकं यत्तेन व्यवाये नेत्यर्थादार्द्रगोमयेणेत्यत्र व्यवधायकस्य गोशब्दस्य पदपरत्वाभावेन निषेधाप्रवृत्त्या वार्त्तिकं प्रत्याख्यातम् । तत्र माषकुम्भं वपतीति माषकुम्भवापस्तेन माषकुम्भवापेनेत्यत्र गतिकारकोपपदानामिति सुबुत्पत्तेः प्रागेवोपपदसमासे आरम्भपक्षे कार्य्यित्वनिवेशे प्रत्ययलक्षणनिषेधकवार्त्तिकाप्रवृत्त्या कुम्भेत्यस्य प्रत्ययलक्षणेन पदत्वात्पदव्यवायेऽपीति निषेधो भवति । सप्तमीतत्पुरुषेण प्रत्याख्यानपक्षे तु वापेत्यस्य पदत्वाभावेन कुम्भेत्यस्य पदपरकत्वाभावेन निषेधाप्राप्त्या णत्वं स्यादिति फलभेदेन प्रत्याख्यानपरभाष्यविरोधेन पदपदं पदत्वयोग्यपरमित्यवश्यं वक्तव्यम् । ततश्च पदत्वाभावेऽप्यर्थवत्त्वेन पदत्वयोग्यतायास्सत्त्वेन तत्परकेण कुम्भेन व्यवधानान्निषेधस्सिद्ध्यतीति फलाभेदः । एवञ्च कार्य्यित्वनिवेशाभावे प्रत्ययलक्षणनिषेधेऽपि कुम्भेत्यस्य पदत्वयोग्यत्वेन णत्वनिषेधोपपत्तौ कार्य्यित्वनिवेशस्यानावश्यकत्वात् । न च भाष्यविरोधाभावाय गतिकारकोपपदानामित्यस्य नित्यत्वकल्पनया सुबुत्पत्त्युत्तरमेव समासोऽनभिधाने

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाऽस्य कल्पनीयमिति वाच्यं, कार्य्यित्वनिवेशाकरणलाघवेन शक्तं पद-मित्याश्रयणस्यैव युक्तत्वात्। न चाटतीत्यटः पचाद्यच्, परमश्चासावटः परमाटस्स इवाचरतीत्याचारक्विबन्तात् संज्ञायां क्तिच्यतो लोपे तितुत्रे-तीटोऽभावे परमाट्तिरित्यत्र प्रत्ययलक्षणेनाटः पदत्वान्न पदान्तादिति ष्टुत्वनिषेधः। कार्य्यित्वनिवेशाभावे प्रत्ययलक्षणनिषेधापत्त्या ष्टुत्वापत्ति-रिति स निवेश आवश्यक इत्यपि न ष्टुत्वमेवेष्यते तन्न स्यादिति स निवेशो न युक्त इत्यस्य वक्तुं शक्यत्वात्। स्वादिष्वसर्वनामस्थाने यचि भमित्यत्र स्वादिष्विितियोगः स्वादौ पूर्वं पदम्भवतीति तस्यार्थस्तेन भ्यामादौ पदत्वसिद्धिः। ततोऽसर्वनामस्थाने यचीति द्वितीयो योगोऽसर्व-नामस्थानेति प्रसज्य प्रतिषेधस्तेन यकारादावजादौ च सर्वनामस्थाने पूर्वं पदन्न सुवित्यनुवर्त्य मध्ये चेत्सुवन्तन्तदपि पदन्नेत्यर्थस्तेन राजानावित्यादौ सुवाचेत्यादावन्तर्वर्त्तिविभक्तिमादाय वागित्यस्य च न पदत्वम्। ततो भमिति। अत्र स्वादिष्वसर्वनामस्थाने यचीति सर्वमनुवर्त्तते। तेन यजादावसर्वनाम-स्थाने स्वादौ पूर्वं भम्भवतीति तस्यार्थः। तेन सुवाचेत्यादेर्वार्त्तिकफलस्य सिद्धौ वार्त्तिकम्भाष्ये प्रत्याख्यातम्। अत्र विमलदिवी सुवाचेत्यत्र सर्व-नामस्थानपरत्वाभावेन निषेधाप्राप्त्याऽन्तर्वर्त्तिविभक्त्या पदत्वेन दिव उदित्युत्वापत्तिः, चोः कुरिति कत्वापत्तिश्च वार्त्तिकसत्त्वे च न भवतीति फलभेदवारणाय सर्वनामस्थानपदं स्वादिपरम्। तथापि परमश्चासौ कविश्च परमकविस्स इवाचरति परमकवयतीत्यादौ वार्त्तिकसत्त्वे प्रत्यय-लक्षणनिषेधेन पदत्वाभावात्पूर्वरूपाभावः प्रत्याख्याने स्वादिपरत्वाभावेन निषेधाप्राप्त्या प्रत्ययलक्षणेन पदत्वात्पूर्वरूपापत्तिरिति फलभेदः। तदर्थं अजादिप्रत्ययमात्रपरमित्युक्तावपि परमश्चासौ लिट्च परमलिट् स इवाचरतीत्याचारक्विबन्ताद्वनिपि परमलिढ्वेत्यादौ वार्तिकेन प्रत्ययलक्षण-निषेधाढ्ढत्वाभावः प्रत्याख्यानेऽजादिप्रत्ययपरत्वाभावेन निषेधाप्राप्त्या प्रत्ययलक्षणेन ढत्वापत्त्या फलभेद एव। तद्भेदाय प्रत्ययमात्रपरत्वमेव वक्तव्यम्। एवं सति परमाट्तिरित्यत्रापि निषेधेन पदत्वाभावात् न पदान्ता-दित्यस्याप्राप्त्या ष्टुत्वमेवेत्यारम्भपक्षेऽपि ष्टुत्वस्यावश्यकत्वेन कार्य्यित्व-निवेशायाञ्जलिप्रदानमेव युक्तमिति दिक्॥

———

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ११. अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १।२।४५

अत्रार्थाच्चासन्निहित इत्यनेनेन्प्रत्यये अर्थीति कुतो नेति नाशंक्यं, शब्दार्थसम्बन्धस्य नित्यत्वाच्छब्देऽर्थसन्निधानस्यैव सत्त्वात्। असन्निहित इत्यनेन स्वविषयकेच्छावत्त्वसम्बन्धेनार्थविशिष्टेऽर्थे अर्थशब्दादिनित्यर्थ एव तात्पर्य्यावधारणेन शब्दस्य तादृशसम्बन्धेनार्थविशिष्टत्वाभावाच्च। लक्ष्यानुरोधेनासन्निहितपदेन च प्रयोजनवाच्यर्थशब्दस्यैव तत्र ग्रहणाच्च।

अर्थवत्त्वञ्च प्राचीनमते अर्थविषयकबोधजनकत्वम्। तच्च प्रत्ययमात्रस्याप्यस्तीति हरिष्वित्यादौ सोरपि प्रातिपदिकत्वे औत्सर्गिकैकवचनापत्तिवारणायाप्रत्ययपर्य्युदासः सार्थकः। कृत्तद्धितान्तञ्चैवार्थवन्न, केवलाः कृतस्तद्धिता वेति भाष्यात्। 'धात्वादीनां विशुद्धाना'*मिति हरिकारिकाबलाच्चोत्तरसूत्रे एकार्थीभावेन लौकिकप्रयोगे प्रसिद्धत्वमर्थवत्त्वम्। तच्च न केवलकृत्तद्धितयोर्वर्त्तत इति नोक्तभाष्यादिविरोधः। एकार्थीभावश्च शब्दविशिष्टा काचिच्छक्तिरेव। वैशिष्ट्यञ्च स्वपर्य्याप्तत्व-स्वघटकशब्दनिष्ठशक्तिज्ञानाधीनज्ञानविषयत्वोभयसम्बन्धेन। प्रतिष्ठानिष्ठाकृष्णसर्प्पादिसमासनिष्ठा शक्तिर्नैकार्थीभावरूपा किन्तु रूढिरेव सेति तत्र स्वघटकेत्यादिद्वितीयसम्बन्धाभावेऽपि नाव्याप्तिः। राजपुरुषादिसमासनिष्ठा च राजसम्बन्धिपुरुषत्वावच्छिन्ननिरूपिता शक्तिरतिरिक्ता वर्त्तते। वैयाकरणमते सा च राजादिपदनिष्ठशक्तिज्ञानादेव ज्ञायत इति तत्र राजपुरुषपदविशिष्टत्वादेकार्थीभावत्वोपपत्तिः। न च लक्षणात्मकशक्तावतिव्याप्तिः स्वं लाक्षणिकः शब्दस्तद्घटको व्यपदेशिवद्भावेन स एव तन्निष्ठशक्तिज्ञानाधीनज्ञानविषयत्वस्वपर्य्याप्तत्वोभयसम्बन्धेन शब्दविशिष्टत्वस्य तत्रापि सत्त्वादिति वाच्यं, द्वितीयसम्बन्धस्थाने स्वघटकविशिष्टत्वस्य निवेशात्। वैशिष्ट्यञ्च स्वनिष्ठशक्तिज्ञानाधीनज्ञानविषयत्व-स्वभिन्ननिष्ठशक्तिज्ञानाधीनज्ञानविषयत्वोभयसम्बन्धेन।

तथा चैकार्थीभावात्मकशक्तिज्ञानाधीनबोधजनकत्वमुत्तरसूत्रेऽर्थवत्त्वम्। परन्त्वस्मिन्मतेऽर्थवत्त्वद्वयोपस्थितिद्वयस्य विभिन्नरूपेण बोधद्वयं प्रति कारणता वक्तव्या। अस्मिन् वक्ष्यमाणे च सूत्रद्वये एकस्मिन् अर्थवत्त्वे बोधद्वयं प्रत्येकस्या एकरूपेणैवार्थवत्त्वोपस्थितेः कारणत्वमिति लाघवम्। किञ्च पूर्वसूत्रे प्रत्ययपर्य्युदासस्य कर्त्तव्यत्वेन गौरवम्। अत एव

* मुद्रितकाण्डत्रये कारिकेयं नोपलभ्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वक्ष्यमाणार्थवत्त्वस्य गुरुशरीरकतया तदुपस्थितेरेकस्या अपि तदुपस्थितिद्वयसमतया न प्राचां गौरवमित्यपास्तम्।

किञ्चोपस्थितेर्योग्यताज्ञानादिकारणसहिताया एव कार्य्योत्पादकतया तत्र योग्यताज्ञानविशिष्टोपस्थितित्वेनोपस्थितिविशिष्टयोग्यताज्ञानत्वेन च विनिगमनाविरहात् कारणताद्वयं प्राचीनमते प्रत्ययभिन्नोपस्थितेराधिक्येन योग्यताज्ञानार्थवत्त्वोपस्थितिस्थाने योग्यताज्ञानार्थवत्त्वोपस्थितिप्रत्ययभिन्नोपस्थितीनां प्रवेशेन तेषां विशेष्यविशेषणभावे विनिगमनाविरहात् कारणताषट्कमित्यतिगौरवम्। अतो नागेशेन सूत्रद्वये एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षार्थबोधजनकत्वमर्थवत्त्वमङ्गीकृतम्। कृत्तद्धिताञ्चैवार्थवदित्यादिभाष्यमप्यत्रैव प्रमाणम्। एतस्यार्थवत्त्वेन विवक्षितस्य या संज्ञा प्रातिपदिकसंज्ञा तत्फलभूता या विभक्तिस्तदितरानपेक्षयेत्यर्थः। प्रत्ययमात्रस्य नार्थवत्त्वं, यतस्तस्य या प्रातिपदिकसंज्ञा तत्फलभूतविभक्तीतरा प्रकृतिस्तत्समभिव्याहारापेक्षयैवार्थवत्त्वात्। रामेत्यादेः प्रातिपदिकसंज्ञाफलभूतविभक्त्यपेक्षत्वेऽपि तदितरानपेक्षयैवार्थबोधकत्वात् प्रातिपदिकत्वोपपत्तिः। रमा गौरीत्यादौ रम् गौर् इत्यस्य या संज्ञा प्रातिपदिकसंज्ञा तत्फलभूतविभक्तीतरष्टाप्ङीप् तदपेक्षत्वेऽपि न प्रातिपदिकत्वहानिः, तत्र विभक्तिपदस्य प्रत्ययपरत्वात्। न चेन्द्राणीत्यादाविन्द्रेत्यस्य या प्रातिपदिकसंज्ञा तत्फलभूतप्रत्ययेतर आनुगागमस्तत्समभिव्याहारापेक्षत्वेन प्रातिपदिकत्वानुपपत्तिरिति वाच्यम्, एतत्संज्ञाफलभूतेतरेत्यस्यैव तत्र विवक्षणात्। प्रत्ययस्याप्रवेशादानुगागमस्य च प्रातिपदिकसंज्ञाफलभूतत्वेनादोषात्। न चैधाञ्चक्र इत्यादावेधामित्यस्य या प्रातिपदिकसंज्ञा तत्फलभूतेतरत्वं चक्र इत्यस्य तत्समभिव्याहारापेक्षयैवार्थवत्त्वात्, प्रातिपदिकत्वोपयोग्यर्थवत्त्वाभावेनाप्रातिपदिकत्वात्। सोरनुत्पत्तौ पदत्वानापत्त्या वा पदान्तस्येत्यनेन वैकल्पिकपरसवर्णानापत्तिरिति वाच्यं, एतत्संज्ञाफलभूतस्थाने एतन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयस्य निवेशेन चक्र इत्यस्यैधाम्निष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वस्यैव सत्त्वेनादोषात्। न च कुम्भकार इत्यादौ कारेत्यस्य प्रातिपदिकत्वानापत्तिरर्थवत्त्वाभावाद्यतः कारेत्यस्य स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरकुम्भसमभिव्याहारेणैवार्थवत्त्वमिति वाच्यम्, निरुक्तविधेयताश्रयेतरो यः पदेतरस्तत्समभिव्याहारेत्यर्थेनादोषात्। एवञ्च तन्निभस्तन्मात्रमित्यादावुत्तरपदस्य पूर्वपदसापेक्षबोधजनकतयाऽर्थवत्त्वाभावेनाप्रातिपदिकत्वाद्विभक्त्यनुत्पत्तौ समासानापत्तिरपि निरस्ता। पञ्चगवधन इत्यादौ पञ्चग-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेत्यस्यार्थवत्त्वेन प्रातिपदिकत्वापत्त्या ङीबापत्तिस्तस्य धनापेक्षया बोधकत्वेऽपि धनस्य पदेतरत्वाभावादिति न वाच्यम्, पदेतरेत्यस्य स्थाने पूर्वपदेतरस्य निवेशनीयत्वात्। न चैतच्छब्दार्थस्याननुगतत्वेन यत्किञ्चिद्व्यक्तिघटितवाक्यार्थबोधे व्यक्त्यन्तरे प्रातिपदिकत्वानापत्तिः। न चैतत्पदार्थमनिवेश्य प्रातिपदिकसंज्ञाफलभूतेत्याद्येव निवेश इति नाननुगम इति वाच्यम्, राज्ञः पुरुषावित्यादौ राज्ञः पुरुषेत्यस्यापि प्रातिपदिकसंज्ञाफलभूता या औविभक्तिस्तदितरानपेक्षबोधजनकत्वेनार्थवत्त्वात्प्रातिपदिकसंज्ञापत्त्या राजप्रकृतिकविभक्तेर्लुगापत्तेः। एतत्पदार्थप्रवेशे त्वावित्यस्य राज्ञः पुरुषेत्यस्य या संज्ञा तत्फलभूतेतरत्वात्तत्समभिव्याहारापेक्षयैव बोधजनकत्वेनादोषादिति वाच्यम्, शब्दविशिष्टत्वमर्थवत्त्वमिति स्वीकारेणानुगमसम्भवात्। वैशिष्ट्यञ्च स्वतादात्म्यस्वविशिष्टसमभिव्याहारानपेक्षबोधजनकत्वोभयसम्बन्धेन। तत्र वैशिष्ट्यं स्वनिष्ठोद्देश्यतानिरूपिताविधेयताश्रयेतरत्वस्वावधिकपूर्वपदेतरत्वोभयसम्बन्धेन। समन्वयः स्पष्टः।

नन्वेवं हरिष्वित्यादावपि हरिशब्दस्य स्वादिष्वसर्वनामस्थान इत्यनेन पदत्वात् सुरूपप्रत्ययस्याप्यर्थवत्त्वापत्तिः। हरिशब्दस्य स्वावधिकपूर्वपदेतरत्वाभावेन स्वविशिष्टत्वाभावादिति चेत्-न। सुबन्तस्यैव पदशब्देन ग्रहणाद्धरिशब्दस्य स्वविशिष्टत्वात्। नन्वेवमप्यत्रिष्वित्यादावत्रेरपत्यानीत्यर्थे प्रत्ययस्य लुकि तद्धितान्तत्वात्प्रातिपदिकत्वेन प्रातिपदिकावयवत्वेन सुपो लुकि पुनः सुपि तत् प्रकृतेस्सुबन्तत्वस्य सत्त्वेन स्वविशिष्टत्वाभावात्तत्र सोः प्रातिपदिकत्वापत्तिरिति चेत्-न। स्वादिष्वितिपदत्वाभाववत्सुबन्तस्यैव पदशब्देन ग्रहणेनादोषात्। ननु 'सर्वं हि वाक्यं क्रियया परिसमाप्यत' इतिन्यायेनास्त्यादिसमभिव्याहारेणैव घटः पट इत्यादावपि बोधकत्वात् कथं प्रातिपदिकत्वं घटादिशब्दानामिति चेत्-न। समभिव्याहारपदेन पूर्वत्वपरत्वयोरेव ग्रहणेनादोषात्। घट इत्यादिना बोधे ह्यस्त्यादिसान्निध्यमात्रमपेक्ष्यते न तु तत्पूर्वत्वं परत्वं वा प्रत्ययस्य बोधकत्वे तु प्रकृतिपरत्वमपेक्ष्यते। तथा च स्वविशिष्टनिरूपितं यत्पूर्वत्वं परत्वं वा तदन्यतरज्ञानाप्रयोज्यबोधजनकत्वं सम्बन्धः पर्य्यवसितः। ननु बोधजनकता न स्वरूपयोग्यतारूपा, सा हि बोधजनकतावच्छेदकानूपूर्वीमत्त्वरूपा। सुरस्तीत्यादौ सुशब्दस्य तादृशबोधकत्वात्तदवच्छेदकं सुबन्तवृत्त्वस्य हरिष्वित्यादौ सोरपि सत्त्वात्प्रातिपदिकत्वापत्तेः। नापि फलोपधायकत्वरूपा, सा हि कार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्य्याधिकरण

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

R8412(?),1
1540



वृत्तित्वरूपा। तस्याः प्रतिबन्धकवशाद्बोधाभावे घट इत्यादावप्यसत्त्वेन प्रातिपदिकत्वानापत्तेरिति चेत्-न, बोधजनकत्वप्रकारकतात्पर्य्यीयविशेष्यतावत्त्वस्य विवक्षितत्वात्, घट इत्यादौ बोधाभावेऽपि तात्पर्य्यसत्त्वात्, हरिष्वित्यादौ सुशब्दे तादृशतात्पर्य्याभावाच्च नाव्याप्त्यतिव्याप्ती। न च रामादिशब्दघटकरेफादावप्यपर्य्याप्त्या तात्पर्य्यीयविशेष्यतासत्त्वात्प्रातिपदिकत्वापत्तिरिति वाच्यम्, तात्पर्य्यीयविशेष्यतापर्य्याप्त्यधिकरणत्वस्यैव निवेशात्। न च रामशब्दघटको रेफोऽर्थबोधको भवत्विति तात्पर्यीयविशेष्यतापर्य्याप्तेरपि रेफे सत्त्वेन दोषतादवस्थ्यं, समुदायतात्पर्य्यसत्त्वे तादृशतात्पर्यात् बोधाभाव इत्यन्यदिति वाच्यम्, तात्पर्य्यविशिष्टत्वस्य निवेशात्। वैशिष्ट्यं स्वीयविशेष्यतापर्य्याप्त्यधिकरणत्वस्वज्ञानजन्यतावच्छेदकविषयतावच्छेदकधर्म्मावच्छिन्ननिरूपितशक्तिपर्य्याप्त्यधिकरणत्वोभयसम्बन्धेन। रेफे च तादृशविशेष्यतापर्याप्त्यधिकरणत्वेऽपि तात्पर्यज्ञानजन्यतावच्छेदकविषयतावच्छेदकधर्म्मो रामत्वादिस्तदवच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणत्वाभावात्। सम्बन्धद्वयसद्भावे प्रातिपदिकत्वस्येष्टत्वाच्च। न ह्यवयवापर्य्याप्तस्य समुदाये पर्याप्तिरिति रीत्या समुदायपर्याप्ता शक्तिस्तादृशी विशेष्यता वाऽवयवेऽपि पर्याप्त्या वर्त्तत एवेति तद्दोषतादवस्थ्यमेवेति न वाच्यम्, संज्ञाविधिस्थले उद्देश्यतावच्छेदकप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वं संज्ञाया भवतीति नियमात्। प्रातिपदिकसंज्ञा स्वीयोद्देश्यतावच्छेदकीभूतार्थवत्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्म्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिनी भवितुमर्हति। पूर्वोक्तरीत्याऽप्यर्थवत्त्वपर्याप्तिर्या रामेति समुदाये वर्तते सैवावयवेऽपि तदनुयोगितावच्छेदकं रामेतिसमुदायगतं चतुष्ट्वमेव न रेफादिनिष्ठमेकत्वं न्यूनवृत्तित्वात्। अन्यूनातिरिक्तवृत्तिधर्म्मस्यैवावच्छेदकत्वात्तदवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिन्यैव प्रातिपदिकसंज्ञया भवितव्यं, तच्च समुदाये प्रातिपदिकसंज्ञायां भविष्यति नावयवे तस्यां सत्यामित्यवयवस्य प्रातिपदिकसंज्ञायां अप्राप्तेः। न च समुदाये जायमाना प्रातिपदिकसंज्ञोक्तरीत्याऽवयवेऽप्यस्त्येवेति कृतेऽप्यर्थवद्ग्रहणे धनं वनमित्यादौ प्रत्येकं वर्णेभ्यो विभक्त्युत्पत्तिर्दुर्वारेति वाच्यम्, प्रातिपदिकात्प्रत्यय इत्यस्य प्रातिपदिकसंज्ञावन्निष्ठावधितानिरूपकपरत्वविशिष्टः प्रत्ययो भवतीत्यर्थः। तत्रावधितायां प्रातिपदिकसंज्ञाया धर्म्मिपारतन्त्र्येण स्वपर्याप्त्यनुयोगितावच्छेदकधर्म्मावच्छिन्नानुयोगितानिरूप-

मुमुक्षु भवन वेद वेदाङ्ग पुस्तकालय
आगत क्रमांक 0073
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कपर्याप्तिप्रतियोगित्वसम्बन्धेनान्वयः। प्रातिपदिकघटकवर्णात्प्रत्ययोत्पत्तौ वर्णनिष्ठावधितायां प्रातिपदिकसंज्ञा पर्याप्त्यनुयोगितावच्छेदकस्समुदायगतो धर्म्मस्तदवच्छिन्नानुयोगितानिरूपकपर्याप्तिप्रतियोगित्वम्बाधितमिति वर्णात्प्रत्योत्पत्तेरसम्भवात्, वृद्धप्रचलनन्यायेन समुदायादेवं प्रत्ययोत्पत्तेश्च।

यत्तु एधामासतुः कल्पमित्यत्रासतुः कल्पेत्यस्य प्रातिपदिकत्वं न स्यादेधाम्समभिव्याहारेणैवार्थबोधजनकत्वेनार्थवत्वाभावादिति तन्न, एधामासतुः कल्पेतिससमुदायस्य प्रत्ययान्तभिन्नतयाऽर्थवत्त्वेन च प्रातिपदिकत्वसम्भवात्। समासग्रहणनियमेन वारणन्तु नोत्तरभागस्य स्वातन्त्र्येण प्रयोगार्हत्वाभावात्। कृत्तद्धितेति सूत्रे प्रत्ययग्रहणपरिभाषाया अप्रवृत्तौ देवदत्तो गार्ग्य इत्यत्र गार्ग्यप्रकृतिकसुरहितस्य देवदत्तो गार्ग्येतिसमुदायस्य तद्धितान्तत्वेन प्रातिपदिकत्वापादनपरभाष्यासङ्गतिस्तस्य गार्ग्यप्रकृतिकविभक्त्यपेक्षयैवार्थबोधकत्वेनार्थवत्वाभावादिति तु न वाच्यन्तद्धितान्तस्य विशेषणमर्थवत्तदन्तबोधकं येन विधिस्तदन्तस्येति सूत्रात्। तथा च गार्ग्यशब्दस्यार्थवत्त्वेन तदन्तस्य तद्धितान्तस्य देवदत्तो गार्ग्येतिसमुदायस्य प्रातिपदिकत्वापत्तेस्सम्भवात् नियमेन वारणन्तु न युक्तम्। गार्ग्येत्युत्तरभागस्य स्वातन्त्र्येण प्रयोगार्हत्वाभावात्।

केचित्तु सूत्रद्वये वृत्तिमत्वमेवार्थवत्त्वमस्तु प्रत्ययपर्युदासोऽपि मास्तु प्रत्ययमात्रस्य प्रातिपदिकत्वेऽपि क्षतिविरहस्तदर्थे लिङ्गसंख्यादेरभावेन ततो विभक्त्युत्पत्तेरसम्भवात्। न चौत्सर्गिकैकवचनापत्तिस्तस्य संख्यादेरनपेक्षणादिति वाच्यं, प्रमाणसद्भावे एवौत्सर्गिकैकवचनप्रवृत्तेः, प्रमाणाभावे तु एकं बक्तीति एकवचनमिति महासंज्ञानुरोधात्। संख्यासद्भाव एव तस्याप्युत्पत्तेरभ्युपगमात्। यथा अव्ययेभ्यस्तदुत्पत्तावव्ययादाप्सुप इत्यत्र सुब्ग्रहणं पचतिकल्पमित्यादौ तादृशभाष्यप्रयोगः प्रमाणं न तथा प्रकृते प्रमाणमस्ति। न च कृत्तद्धितान्तञ्चैवार्थवन्न केवलाः कृतस्तद्धिता वेति भाष्यविरोधः, वृत्तिमत्त्वस्य केवलप्रत्ययेऽपि सत्त्वात् इति वाच्यम्, कृत्तद्धितान्तञ्चैवार्थवदित्यस्य प्रातिपदिकमिति शेषः। तथा च कृत्तद्धितान्तमेवार्थवत् प्रातिपदिकं भवति केवलाः कृतस्तद्धिता वा अर्थवन्तोऽपि न प्रातिपदिकसंज्ञका इत्यर्थात्। कृत्तद्धितग्रहणाभ्यां प्रत्ययग्रहणपरिभाषया तदादितदन्तोपस्थितौ कृदन्ततदादिरूपं तद्धितान्ततदादिरूपं च यदर्थवत्तस्य प्रातिपदिकसंज्ञेति कृत्तद्धितेति सूत्रार्थेन केवलस्य कृतस्तद्धितस्य चार्थवत्त्वेऽपि कृदन्ततदादित्वाभावात्। व्यपदेशिवद्भावेन केव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लयोः कृत्तद्धितयोस्तदन्तत्वेऽपि तदादित्वाभावात्। न च तदादित्वमपि व्यपदेशिवद्भावेन स्यादत एव व्यतिसे इत्यत्र सेमात्रस्य पदत्वमिरिया-नित्यादौ प्रत्ययमात्रस्य तद्धितान्तत्वात्प्रातिपदकत्वन्तथैव शब्दरत्ने प्रतिपादितञ्चेति वाच्यम्, घटकत्वघटितत्वयोरेव तेनातिदेशस्यान्यात्रोपपादितत्वात्। व्यतिसे इरियानित्यादौ यथोद्देशपक्षस्यैवाश्रयणेन पदत्व-प्रातिपदिकत्वोपपत्तिरित्याहुः।

नन्वर्थवद्ग्रहणस्य किं फलं? धनम्वनमित्यादौ प्रतिवर्णं प्रातिपदिकत्वेऽपि लिङ्गसंख्यादेरभावेन वृद्धप्रचलनन्यायेन समुदायादेव विभक्त्युत्पत्त्या चावयवेभ्यो विभक्त्युत्पत्त्यभावेन दोषाभावात्। नापि प्रातिपदिकत्वे प्रातिपदिकाद्धात्वर्थ इति णिच् प्रत्ययापत्तिप्रत्याशा तत्करोति तदाचष्ट इत्यनेन करणकर्म्माख्यानकर्मबोधकादेव करोत्याद्यर्थे तस्य विधानलाभेन निरर्थकात्तस्य प्राप्त्यसम्भवादिति चेत्-न, दश दाडिमानि षडपूपा इत्यादिनिरर्थकसमुदायस्य प्रातिपदिकत्वापत्त्या तदवयवस्य सुपो लुगापत्तेः। न च समासग्रहणनियमेन न दोष इति वाच्यम्, दश दाडीत्येतन्मात्र-समुदायोत्तरभागस्य स्वातन्त्र्येण प्रयोगार्हत्वाभावेन तस्य नियमेन वारणासम्भवात्, तत्र प्रातिपदिकत्वापत्तेर्दुर्वारत्वात्। यदि च सुपो धातुप्रातिपदिकयोरित्यत्र धातुसाहचर्येण प्रातिपदिकस्यापि वृत्तिमत एव ग्रहणात्प्रकृते वृत्तेरभावेनादोष इत्युच्यते तदा साहचर्यपरिभाषाऽनित्यत्व-ज्ञापकन्तदित्यवेहि। अधातुरित्यस्य वैयाकरणमते समासेऽतिरिक्त-शक्तिस्वीकाराद्धातुप्रतियोगिकभेदवानित्यर्थः। तस्याभेदेनार्थवत्यन्वयः। नैयायिकमते नञर्थभेदे प्रतियोगितया धातोरन्वयः। भेदस्य च स्वरूप-सम्बन्धेनार्थवत्यन्वयो नामार्थयोरभेदातिरिक्तसम्बन्धोऽव्युत्पन्न इत्यस्य निपातातिरिक्तनामार्थविषयकतया प्रकृते न तद्विरोधः। नञो भेदवति लक्षणयाऽभेदान्वयो वा न चार्थवत्त्वावच्छेदेन धातुप्रतियोगिको भेदो नञा बोधयितुमशक्यः, अर्थवत्त्वस्य धातुवृत्तित्वात् प्रतियोग्यवृत्तिधर्मस्यैव भेदानुयोगितावच्छेदकत्वनियमात्। अत एव द्रव्यत्वावच्छेदेन घटत्वावच्छिन्नप्रतियोगिताकभेदतात्पर्येण द्रव्यं न घट इति न प्रयोगः इति चेत्-न, उद्देश्यतावच्छेदकव्यापकत्वस्य नियमतो विधेये भानेन द्रव्यत्वरूपोद्देश्य-तावच्छेदकव्यापकत्वस्य घटत्वावच्छिन्नप्रतियोगिताकभेदरूपविधेये बाधात्तादृशप्रयोगविरहोपपत्तावुक्तनियमानुपयोगेनापत्त्यभावात्।

प्रकृते प्रातिपदिकसंज्ञाया एव विधेयतया भेदस्याविधेयत्वेनार्थवत्त्व-व्यापकत्वाभावेऽपि क्षतिविरहात्, अर्थवत्त्वस्यानुयोगितावच्छेदकत्वा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावेऽपि तत्सामानाधिकरण्येनानुयोगितायास्सत्त्वे बाधकाभावाच्च, भेद-विधेयस्थल एव तादृशनियमस्वीकारोऽत एवाघटं द्रव्यमानयेत्यादौ द्रव्यत्वा-वच्छेदेन घटभेदप्रतीतिरित्यदोषाच्च। अथ धातुप्रतियोगिकभेदवतोऽर्थवतः प्रातिपदिकत्वे भूधातुरेध्धातुर्नेति प्रतीतिविषयीभूतस्यैध्धातुनिष्ठप्रतियो-गिकत्ताकभेदस्यार्थवत्त्वस्य च भूधातौ सत्त्वेन तस्य प्रातिपदिकत्वापत्तिः। न चाधातुपदे धातुत्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्ननिरूपितशक्ति-स्वीकारेण भेदे धातोः धातुत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयेन च धातुत्वावच्छिन्नप्रतियोगिताकभेदविशेषविशिष्टस्यैवार्थवतः प्रातिपदिक-संज्ञेत्यर्थलाभेन भेदस्य प्रतियोगितावच्छेदकेन सह विरोधाद्धातौ धातुत्वा-वच्छिन्नप्रतियोगिताकभेदस्याभावेनापत्त्यभाव इति वाच्यं, भूधातुर्धातु-घटोभयन्नेतिविषयीभूतधातुत्वघटत्वोभयत्वावच्छिन्नप्रतियोगिताकभेदस्य धातुत्वावच्छिन्नप्रतियोगिताकतया तस्य च धाताविपि सत्त्वेनापत्तिताद-वस्थ्यात्। न चोक्तभेदीयप्रतियोगितावच्छेदकमुभयत्वमेव न धातुत्वादि-कमिति तं भेदमादाय न दोष इति वाच्यम्, यत्किञ्चिदुभयवति देशे घट-पटौ न स्त इति घटपटौ देवदत्तयज्ञदत्तौ नेति प्रतीत्यनापत्तेः प्रतियोगिता-वच्छेदकीभूतोभयत्वावच्छिन्नस्य तद्देशे प्रतियोगितावच्छेदकीभूतोभय-त्वस्य च घटपटयोस्सत्त्वात्। न च सामानाधिकरण्येनोभयत्वविशेषणतया प्रतियोगितावच्छेदकतावच्छेदकतयैव घटत्वादेर्भानेनोक्तापत्त्यभावेन न प्रतियोगितावच्छेदकन्धातुत्वमिति न दोष इति वाच्यं, धातुघटौ न स्त इति प्रतीतौ प्रतियोगिविशेषणतयैव तयोर्भानस्य सर्वसम्मततयाऽवच्छेद-कत्वस्यैव तयोस्सत्त्वादापत्त्यवारणात्। न च धातुत्वमात्रावच्छिन्नप्रतियो-गिताकभेदवत एवार्थवतः प्रातिपदिकत्वविधानान्नोभयभेदमादायापत्ति-सम्भवो यतोऽन्ययोगव्यवच्छेदो मात्रशब्दार्थोऽन्यत्वं च समभिव्या-हृतपदार्थापेक्षया योगस्सम्बन्धस्स च समभिव्याहृतपदार्थो येन सम्बन्धेन समभिव्याहृतपदार्थेऽन्वेति स एव व्यवच्छेदोऽभावस्तथा च धातुत्वा-वच्छिन्नधातुत्वेतरधर्म्मानवच्छिन्नप्रतियोगिताको भेद एव गृह्यते नोभ-यभेदस्तत्र धातुत्वेतरघटत्वावच्छिन्नत्वस्यैव प्रतियोगितायां सत्त्वादिति वाच्यम्, धातुत्वेतरधर्म्मावच्छिन्नत्वघटोभयाभावमादायोभयभेदस्य ग्रह-णसम्भवेनापत्तितादवस्थ्यादिति चेत्-न, धातुत्वपर्याप्तावच्छेदकतानिरू-पितावच्छेद्यतावत्प्रतियोगितानिरूपकभेदस्य ग्रहणेनादोषादुभयभेदीयप्रति-योगितावच्छेदकताया धातुत्वघटत्वोभयत्वरूपत्रितयपर्य्याप्तत्वेन धातुत्वा-पर्य्याप्तत्वात्। न चोभयभेदीयप्रतियोगितावच्छेदकता धातुत्वादिप्रत्येक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पर्याप्तैव न त्रितयपर्य्याप्ता मानाभावादिति वाच्यम्, घटः घटो न पटो नेति प्रतीतिर्न्न भवति घटः घटपटौ नेति प्रतीतिर्भवतीति वैषम्यस्य त्रितयपर्याप्तावच्छेदकतामन्तरेणोपपत्त्यभावात्। न च न ह्यवयवापर्य्याप्तस्य समुदाये पर्याप्तिरस्तीतिन्यायाद्वस्तुगत्या च त्रितयपर्य्याप्ताऽपि प्रत्येकपर्य्याप्ताऽस्त्येवेति वाच्यं, धातुत्वगतैकत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोग्यवच्छेदकतानिरूपितावच्छेद्यतावत्प्रतियोगिताकभेदस्यैव ग्रहणेनादोषात्। प्रकृतावच्छेदकता च या त्रितयपर्याप्ता सैवोक्तयुक्त्या धातुत्वपर्य्याप्ता। तस्याः पर्य्याप्तिरप्येकैव त्रितये विद्यमाना धातुत्वेऽपि वर्त्तते। तदनुयोगिताऽपि तथैव वर्त्तते। एकैव च सा, तदवच्छेदकञ्च तदन्यूनानतिरिक्तवृत्तित्रितयगतं त्रित्वमेव न धातुत्वादिगतमेकत्वन्तस्य न्यूनवृत्तित्वादिति साऽवच्छेदकता न धातुत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिनीति नोभयभेदमादाय दोष इति बोध्यम्। न च तस्या अवच्छेदकतात्वेन पर्याप्तिर्यद्यपि त्रिष्वेव तथापि वस्तुत्वादिना तस्याः पर्याप्तिः प्रत्येकमेव धातुत्वादिष्विति तदनुयोगितावच्छेदकं धातुत्वादिगतमेकत्वमेवेति तद्दोषतादवस्थ्यमिति वाच्यम्, स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन धातुत्वगतैकत्ववृत्तिप्रतियोगितानिरूपकभेदेत्यर्थेनादोषात्। तथा सति वस्तुत्वावच्छिन्नप्रतियोगिताकपर्याप्तेरग्रहणात्। ननु सकलब्राह्मणव्यक्तिषु वर्त्तमानं ब्राह्मणत्वमेतद्ब्राह्मणवृत्तित्वविशिष्टब्राह्मणत्वत्वेनैतद्ब्राह्मणे एव यथा वर्त्तते तथा त्रितयपर्य्याप्ताप्यवच्छेदकता धातुत्ववृत्तित्वविशिष्टावच्छेदकतात्वेन धातुत्व एव वर्त्तत इति नोक्तदोषनिस्तारः। न च सम्बन्धघटकप्रतियोगिता अवच्छेदकतात्वमात्रावच्छिन्ना गृह्यते। निरुक्ता तु धातुत्ववृत्तित्वावच्छेदकतात्वोभयधर्म्मावच्छिन्नेति तद्व्युदास इति वाच्यं, पुनरप्युभयाभावमादाय दोषस्य सत्त्वात् अवच्छेदकतात्वपर्याप्तावच्छेदकतानिरूपितावच्छेद्यतावती प्रतियोगिता निवेश्यते। सा तु अवच्छेदकतात्वधातुत्ववृत्तित्वोभयपर्याप्तावच्छेदकता निरूपितावच्छेद्यतावतीति न दोष इत्यपि पूर्वोक्तदिशा दोषग्रस्तमेवेति चेत्—

अत्रोच्यते—अयं ब्राह्मण एतद्ब्राह्मणवृत्तित्वविशिष्टब्राह्मणत्ववान् एतद्ब्राह्मणवृत्तित्वविशिष्टपदार्थत्ववान् एतद्ब्राह्मणवृत्तित्वविशिष्टद्रव्यत्ववानित्याद्यनन्तप्रतीतिविषयीभूताऽऽधेयता एतद्ब्राह्मणवृत्तित्वावच्छिन्नैकैव नैतद्ब्राह्मणवृत्तित्वब्राह्मणत्वत्वाद्युभयधर्म्मावच्छिन्ना प्रतिप्रतीतिभिन्नाऽनन्ताधेयताकल्पनाप्रसङ्गात्, एतद्ब्राह्मणवृत्तिमानयं ब्राह्मण इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रतीतावेतद्ब्राह्मणवृत्तित्वावच्छिन्नाधेयतायाः क्लृप्तत्वात्। न च प्रतीतिवैलक्षण्यानुपपत्तिः प्रकारतया भासमानब्राह्मणत्वादिवैलक्षण्येन प्रतीतिवैलक्षण्यसम्भवात्। एवमेतद्व्यक्तिवृत्तिब्राह्मणत्ववानयं तद्व्यक्तिवृत्तिब्राह्मणत्ववान् स इत्यादिप्रतीतावपि एतद्व्यक्तिवृत्तित्वादिधर्म्मावच्छिन्नैवाधेयता नोभयधर्मावच्छिन्ना, धर्म्मद्वयस्यावच्छेदकत्वे गौरवात् फलाभावाच्च न ब्राह्मणत्वावच्छिन्ना सर्वासु व्यक्तिषु एतद्व्यक्तिवृत्तिब्राह्मणत्ववानित्यादिप्रतीत्यापत्तेः। तथा प्रकृतेऽपि धातुत्ववृत्तित्वविशिष्टावच्छेदकतावद्धातुत्वमिति प्रतीतावपि धातुत्ववृत्तित्वावच्छिन्नैवाधेयता नावच्छेदकतात्वावच्छिन्ना न वा धातुत्ववृत्तित्वावच्छेदकतात्वोभयधर्म्मावच्छिन्नाऽतिप्रसङ्गात्, गौरवाच्च। तथा च प्रकृते स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिसम्बन्धावच्छिन्नाधेयतानिरूपिताधारतावच्छेदकत्वसम्बन्धेन धातुत्वगतैकत्ववृत्तिप्रतियोगितानिरूपकभेदेत्यर्थेन न दोष इति बोध्यम्। किञ्च यथा त्रितयपर्याप्तावच्छेदकता धातुत्ववृत्तित्वेन धातुत्वपर्याप्तैव तथैव त्रितयपर्य्याप्तं त्रित्वमपि धातुत्ववृत्तित्वेन धातुत्वपर्याप्तमेवेति क्लृप्तत्वात्त्रित्वमेव तथाभूतं तथाभूतावच्छेदकतापर्य्याप्त्यनुयोगितावच्छेदकञ्च त्वेकत्वमिति पूर्वोक्तसम्बन्धेऽपि न दोष इत्यपि साधु। न चैवमपि धातुत्वेन घटो न धातुरिति व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदमादाय धातोः प्रातिपदिकत्वं दुर्वारमेतद्भेदस्य निरुक्तभेदरूपत्वात्। न च प्रतियोगिताया धातुनिष्ठत्वेन विशेषणान्न दोष एतद्भेदीयप्रतियोगिताया घटनिष्ठत्वादिति वाच्यम्, धातुत्वेन भूएधन्तिसामान्यधर्मावच्छिन्नप्रतियोगिताकविशेषभेदमादाय दोषस्य तादवस्थ्यात् तदीयप्रतियोगिताया धातुनिष्ठत्वात्। न च धातुत्वव्यापकत्वेन प्रतियोगिता विशेषणीया निरुक्तभेदीयप्रतियोगिता चैध्निष्ठेव न धातुत्वव्यापिकेति न दोष इति वाच्यम्, धातुत्वेन धातुघटोभयन्नेति भेदमादाय दोषस्य दुरुद्धरत्वादेतद्भेदीयप्रतियोगिताया धातुत्वव्यापकत्वादितिचेत्-न, प्रतियोगिताऽभावस्य निरूपणादभावस्य प्रतियोगी निरूपको निरूपकतावच्छेदकश्च प्रतियोगिविशेषणतया भासमानो धर्म्मस्तथा च धातुत्वविशिष्टो यो भेद इत्यर्थः। वैशिष्ट्यञ्च स्वावच्छिन्नप्रतियोगितानिरूपकत्वस्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्वैतदुभयसम्बन्धेन। तादृशश्च भेदो धातुत्वेन धातुर्न्नेत्याकारक एवेति तदन्यभेदमादाय दोषानवकाशात्। न च प्रदर्शितभेदीयनिरूपकताया अपि धातुत्वावच्छिन्नत्वात्तमादाय दोषो वज्रलेपायितः। तत्रापि पर्याप्तिनिवेशे पूर्वोक्तरीत्याऽनिस्तार एवेति वाच्यं,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धातुत्वगतैकत्ववृत्तिभेदवत इत्यर्थेनादोषात्। वृत्तिता च स्वप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्वनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन समन्वयः पूर्वोक्तप्रकारेणैवेत्यदोषात्। अथ व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकं धातुत्वेन संयोगेन धातुर्न्न धातुरित्याद्याकारकं भेदमादायापत्तिस्तस्य केवलान्वयित्वेन धातौ सत्त्वादिति चेत्-न। अवच्छेदकतायास्स्वरूपसम्बन्धावच्छिन्नत्वेन विशेषणात्। न च स्वरूपसंयोगोभयसम्बन्धेन धातुत्वेन धातुर्न्नेति भेदमादायानिस्तारः स्वरूपपर्याप्तावच्छेदकताकावच्छेदकताया निवेशेनापि न निर्वाहः। पूर्वोक्तयुक्त्या स्वरूपसंयोगोभयपर्याप्ताया अपि स्वरूपपर्याप्तत्वादिति चेत्-मैवम्। धातुत्वप्रतियोगिकस्वरूपसम्बन्धस्य धातुत्वरूपतया धातुत्वगतैकत्वनिरूपितवृत्तितावच्छेदकतया स्वनिरूपितप्रतियोगितावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वरूपस्तृतीयोऽपि सम्बन्धो निवेश्यः। निरुक्तोभयसम्बन्धावच्छिन्नावच्छेदकतावच्छेकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकता च धातुत्वरूपस्वरूपसंयोगोभयगतद्वित्व एव न तु धातुत्वरूपस्वरूपगतैकत्व इति नोभयसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदमादाय दोषः। न च धातुत्वेन घटो न घटत्वेन धातुर्न्नेति प्रतीतिद्वयविषयीभूतभेदद्वयस्य समनियतत्वेनैकतया तयोश्च धातावपि सत्त्वेन तद्भेदस्य निरूपकतावच्छेदकताऽन्तिमप्रतीतिमादाय प्रतियोगितावच्छेदकता चाद्यप्रतीतिमादाय तामेवादाय प्रतियोगितावच्छेदकतावच्छेदकता च धातुत्व एवास्तीति स भेद उक्तसम्बन्धत्रयेण धातुत्वगतैकत्वे वर्तत इति तमादाय धातोः प्रातिपदिकत्वं दुर्वारमेवेति वाच्यम्, धातुत्वगतैकत्ववृत्तिप्रतियोगितानिरूपकस्य भेदस्य विवक्षणात्। वृत्तिता च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्वावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेकत्वस्वानुयोगितावच्छेदकाभावत्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वैतत्त्रितयसम्बन्धेन। स्वं प्रतियोगिता यस्याः प्रतियोगिताया धातुत्वमवच्छेदकं तन्निरूपितानुयोगितावच्छेदकाभावत्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावच्छेदकं घटत्वं यन्निरूपितानुयोगितावच्छेदकाभावत्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावच्छेदकं धातुत्वं तस्या अवच्छेदकञ्च घटत्वमिति नेयं प्रतियोगिता निरुक्तसंज्ञाप्रयोजक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुक्षिप्रविष्टा घटत्वावच्छिन्ननिरूपकताकभेदत्वावच्छेदेन धातुत्वावच्छिन्न-प्रतियोगितानिरूपकत्वं धातुत्वावच्छिन्ननिरूपकताकभेदत्वावच्छेदेन चास्य भेदस्य घटत्वावच्छिन्नप्रतियोगिताकत्वमेवेति यावत् ॥

## पूर्वसूत्रेणैव सिद्धे समासग्रहणन्नियमार्थमिति

राजन् अस् पुरुष स् इत्यादिसमासस्यार्थवत्सूत्रेण धातुभिन्नत्वप्रत्यय-भिन्नत्वप्रत्ययान्तभिन्नत्वार्थवत्त्वानां सत्त्वेन प्रातिपदिकत्वसिद्धिरित्यर्थः। ननु राजन् अस् पुरुष सित्यस्य प्रत्ययान्तत्वस्यैव सत्त्वात् कथं पूर्वसूत्रेण सिद्धिरिति चेत्-न, प्रत्ययग्रहणपरिभाषया प्रत्ययान्ततदादिभिन्नस्येत्यर्थेन प्रकृते प्रत्ययान्तत्वेऽपि तदादित्वाभावात् ।

ननु तदादित्वं प्रकृत्यादित्वमेव । तदप्यस्त्येव ङस्प्रकृतित्वं राजन्-शब्दे । समुदायस्य तदादित्वादिति चेत्-न, प्रत्ययविशिष्टत्वस्यैव तदादि-त्वपदार्थत्वात् । वैशिष्ट्यञ्च स्वनिष्ठचरमावयवतानिरूपकत्वस्वनिष्ठविधे-यतानिरूपितोद्देश्यताश्रयनिष्ठाद्यवयवतानिरूपकत्वोभयसम्बन्धेन। राजन् अस् पुरुष सिति समुदाये हि आद्यसम्बन्धाभावात् ङसमादाय द्वितीय-सम्बन्धाभावात्सुमादाय न प्रत्ययविशिष्टत्वम् । ननु घटपटसमुदायो न घट इति प्रतीत्यभावात् स्ववृत्तिव्यासज्यवृत्तिधर्म्मावच्छिन्नानुयोगिताक-त्वप्रतियोगिको भेदो नाङ्गीक्रियत इति प्रत्ययान्तसमुदायत्वावच्छिन्नानु-योगिताकस्य प्रत्ययान्तप्रतियोगिकभेदस्याप्यभावेन कथं प्रत्ययान्तसमुदाये राजन् ङस् पुरुष सित्यत्र प्रत्ययान्तभिन्नत्वमिति चेत्-न, प्रत्ययान्तसमु-दायत्वे अनुयोगितावच्छेदकत्वमन्तरेणैव निरवच्छिन्नानुयोगिताकस्य तादृशभेदस्य सत्त्वे बाधकाभावेनादोषात् । नन्वेवं निरवच्छिन्नानुयोगिता-कभेदमादायैव घटपटसमुदायो न घट इति प्रतीत्यापत्तिरिति चेत्-न, उद्देश्यतावच्छेदकावच्छेदेनैव विधेयान्वयनियमेन प्रकृते भेदस्य विधेयत्वेन निरवच्छिन्नानुयोगिताकस्य तस्य भानासम्भवादत्र च भेदस्य विधेयत्वा-भावादस्तु वा तद्व्यक्तित्वावच्छिन्नानुयोगिताक एव प्रत्ययान्तभेदः, प्रत्य-यान्तसमुदाये तमादायैव निर्वाहसम्भवात् । न तथा पूर्वोक्तप्रतीतौ तद्व्य-क्तित्वस्यानुल्लेखात् । अत एव स्वाङ्गसमुदाये न स्वाङ्गत्वं सुसखिसमुदाये सखिभिन्नत्वमित्यादि प्रामाणिकशिरोमणेर्व्यवहारोपपत्तिः प्रत्ययान्तत्व-प्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकधर्म्मावच्छिन्नप्रतियोगिताक एव भेदो विषयस्तस्य च सत्त्वे बाधकाभाव इति कश्चित् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु 'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते'*इति यथा स्वर्गकामो यजेत, अहरहः सन्ध्यामुपासीदित्यादौ यागस्य सन्ध्योपासनस्य च प्रमाणान्तरेणाप्राप्तस्य विधानादनयोर्विधित्वम्। व्रीहीन् अवहन्ति समे जयतीत्यादौ तुषविमोकस्यावघातेन नखविदलनेन च सम्भवाद्यदा नखविदलनेनैव तुषविमोकेच्छा तदाऽवघातस्याप्राप्तत्वात्पाक्षिकस्य तस्य विधानादेवं यदा विषमदेश एव सौकर्य्यादिना यागकरणेच्छा तदाऽप्राप्तत्वात् पाक्षिकस्य समदेशाधिकरणकत्वस्य विधानाच्चानयोर्न्नियमत्वमवघातेनैव तण्डुलनिष्पत्तावपूर्वोत्पत्तिर्न्न नखविदलनेन समदेशाधिकरणकयागेनैवापूर्वोत्पत्तिर्न्न विषमदेशाधिकरणकयागेनेति नियम्यते। 'पञ्च पञ्च नखा भक्ष्या' इत्यादौ क्षुन्निवृत्यर्थं रागात् शास्त्रव्यापारमन्तरेणैव भक्षणं प्राप्तं, तच्च भक्षणं पञ्चसु पञ्चनखेषु अन्यत्र च श्वमांसादिषु प्राप्तं बोध्यत इति परिसंख्या। अत्रापि पञ्च पञ्च नखा एव भक्ष्या न श्वादय इति नियमस्यैव प्रतीतेः कथन्न नियमत्वमिति शङ्का न कार्य्या, भक्षणेनैव क्षुन्निवृत्तेर्भक्षणस्य पाक्षिकत्वाभावेन नियमत्वासम्भवात्।

एवञ्च प्रातिपदिकत्वस्य पाक्षिकत्वाभावात् कथं नियमः, प्रत्युत समासे वाक्ये च प्राप्तत्वात् परिसंख्यैव वक्तुं युक्तेरिति चेत्-न, अन्यनिवृत्तिरूपनियमसाधर्म्येणात्र शास्त्रे परिसंख्याया अपि नियमशब्देन व्यवहारात्। नियमत्वमत्र शास्त्रे यत् किञ्चिच्छास्त्रविशिष्टत्वं; वैशिष्ट्यं स्वीयविधेयतावच्छेदकधर्म्मावच्छिन्नविधायकत्वस्वीयोद्देश्यतावच्छेदकव्याप्यधर्म्मावच्छिन्नोद्देश्यताकत्वोभयसम्बन्धेन। समासग्रहणस्यार्थवच्छास्त्रविशिष्टत्वान्नियमत्वम्। वृद्धिरेचीत्यस्याद्गुणसूत्रवैशिष्ट्यवारणायाद्यः, ओमाङोश्चेत्यस्यैङि पररूपसूत्रवैशिष्ट्यवारणाय द्वितीयस्सम्बन्धस्तस्य च द्विविधा प्रवृत्तिर्निषेधमुखेन विधिमुखेन च। आदौ स्वीयोद्देश्यतावच्छेदकव्यापको यः स्ववैयर्ध्यप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यो धर्म्मस्तद्धर्मावच्छिन्नस्य स्वीयोद्देश्यतावच्छेदकधर्म्मावच्छिन्नातिरिक्तस्य स्वविधेयाभावो बोध्यते। यथा समासत्वव्यापकोऽर्थवत्सूत्रोद्देश्यतावच्छेदकीभूतधातुभिन्नप्रत्ययभिन्नप्रत्ययान्तभिन्नार्थवत्त्वव्याप्यः पूर्वभागपदघटितसमुदायत्वधर्मस्तदवच्छिन्नस्य समासत्वावच्छिन्नातिरिक्तस्य वाक्यस्य प्रातिपदिकत्वाभावो बोधनीयः समासग्रहणेन परन्त्वस्मिन् पक्षे

---

*इति भट्टपादानां कारिका। तन्त्रवार्त्तिक, पृ० ५९ काशीसंस्करणम्। न्यायसिद्धान्तमञ्जरीकारैः 'तदुक्तं भट्टपादैः' इत्यादिशब्दैरुक्तत्वात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्ये प्राप्तस्य प्रातिपदिकत्वस्य बाधः समासस्य प्रातिपदिकसंज्ञेति योऽयं स्वार्थस्तस्य त्यागः वाक्यस्य नेति परार्थकल्पनेति त्रिदोषग्रासात्।

विधिमुखेनैव सर्वत्र प्रवृत्तिं **नवीनाः** स्वीकुर्वन्ति। तत्र च पक्षे स्वीयोद्देश्यतावच्छेदकव्यापको व्यर्थताप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यो यो धर्म्मस्तद्धर्म्मावच्छिन्नातिरिक्तत्वेन व्यर्थताप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचो भवति। तथा च स्वीयोद्देश्यतावच्छेदकावच्छिन्ने शास्त्रान्तरेणाप्राप्तत्वात् स्वेन कार्यं विधीयते, यथा प्रकृते धातुभिन्नप्रत्ययभिन्नप्रत्ययान्तभिन्नार्थवति पूर्वभागपदघटितसमुदायत्वरूपं यत्समासत्वव्यापकमर्थवत्वव्याप्यन्तद्धर्मावच्छिन्नातिरिक्तत्वेन संकोचे समासे वाक्ये च न प्राप्तं प्रातिपदिकत्वं समासे समासग्रहणेन विधीयते वाक्ये च नैवेष्यते। एवमेव सर्वत्र समन्वयः कर्त्तव्यः। एतदेवोक्तं **कौमुद्यां** 'यत्र संघात' इत्यादिना। अत्रोत्तरभागः पूर्वभागप्रकृतिकप्रत्ययभिन्नो गृह्यते। तेन जन्मवानित्यस्य न व्यावृत्तिर्नापि राजा इयानित्यस्य प्रातिपदिकत्वम्। गवित्ययमाहेत्यादौ पूर्वभागस्य गवित्यस्याभेदानुकरणत्वेनापदत्वाद्व्यावृत्त्यनापत्त्या वृषणश्व इत्यादौ समासे वृषण्वस्वश्वयोरित्यनेन पूर्वभागस्य भत्वात्समासत्वव्यापकत्वस्य पूर्वभागपदघटितसमुदायत्वेऽभावाच्च।

यद्वा प्रकृतिप्रत्ययभावानापन्नसंघात इत्यादि **मनोरमाकारेणोक्तम्।** अत्रोच्यते-प्रकृतिप्रत्ययभावापन्नत्वं प्रत्ययविशिष्टभिन्नत्वम्। वैशिष्ट्यं स्वनिष्ठचरमावयवतानिरूपकत्वस्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयनिष्ठावयवतानिरूपकत्वोभयसम्बन्धेन। तत्त्वञ्च राजन् असित्यस्य पुरुष स् इत्यस्य च तद्भिन्नत्वं राजन् अस् पुरुष सित्यस्येति भवति प्रकृतिप्रत्ययभावानापन्नत्वं न चैवं रामेत्यस्यापि तदनापन्नत्वेन नियमात् प्रातिपदिकत्वानापत्तिरेवं बहुपटव इत्यस्यापि तत्त्वेन तत्त्वानापत्तिरिति वाच्यम्। प्रत्ययविशिष्टत्वस्यैव प्रकृतिप्रत्ययभावानापन्नत्वपदार्थत्वात्। वैशिष्ट्यञ्च स्वघटितत्वस्वप्रकृतिघटितत्वस्वविशिष्टघटितत्वैतत्त्रितयसम्बन्धेन। तत्र वैशिष्ट्यं—स्वावयवाघटितत्वस्वप्रकृत्यवयवाघटितत्वस्वान्तप्रकृतिकेतरत्वैतत्त्रितयसम्बन्धेन। राजन् अस् पुरुष सित्यत्र सुप्रत्ययस्य तृतीयसम्बन्धो राजन्शब्दमादाय सम्बन्धद्वयञ्च स्पष्टमेव। बहुपटव इत्यत्र तृतीयसम्बन्धाभावान्न तत्त्वम्। रामेत्यत्र चोदासीनप्रत्ययस्य तृतीयसम्बन्धसत्त्वेऽप्याद्यसम्बन्धाभावान्न तत्त्वम्।

**नवीनैश्**चोक्तदोषद्वयेन मूलोक्तं विहाय स्वातन्त्र्येण प्रयोगार्हपूर्वोत्तरभागकसमुदायस्य चेत् समासस्यैवेति नियमाकार उक्तः। बहुपटव इत्यत्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बहुचः प्रयोगार्हत्वेऽपि स्वातन्त्र्येण तत्त्वाभावात्। अनितिपरस्याप्यनुकरणस्य सत्त्वेन गवित्ययमाहेत्यादौ गवित्यस्य स्वातन्त्र्येण प्रयोगार्हत्वाज्जन्मवान् पुत्रकाम्येत्यादावुत्तरभागस्य तत्त्वाभावात् वृषणश्व इत्यत्र पूर्वोत्तरभागस्य तत्त्वान्न दोषः। स्वातन्त्र्येण प्रयोगार्हत्वञ्च न स्वप्रकृतिकप्रत्ययेतरसमभिव्याहारानपेक्षबोधजनकत्वम्। देवदत्तो गार्ग्य इत्यत्र गार्ग्येत्यस्यापि तत्त्वापत्त्या देवदत्तो गार्ग्येतिसमुदायस्य समासग्रहणनियमेनैव प्रातिपदिकत्वानापत्त्या प्रत्ययग्रहणपरिभाषाया अभावे तद्धितान्तत्वात् प्रातिपदिकत्वापादनपरभाष्यासंगत्यापत्तेः। किन्तु यस्य समुदायस्य स्वातन्त्र्येण प्रयोगार्हपूर्वोत्तरभागकसमुदायत्वं विवक्षितं तस्य या संज्ञा तत्फलभूतविभक्तीतरसमभिव्याहारानपेक्षबोधजनकत्वं राज्ञः पुरुष इत्यादिवाक्यस्य समासस्य च या संज्ञा तत्फलभूतविभक्तीतरानपेक्षयाऽर्थबोधकत्वाद्राज्ञ इत्यस्य पुरुष इत्यस्य च स्वातन्त्र्येण प्रयोगार्हत्वं सुघटम्। न च कुम्भकार इत्यादौ समासे कारेत्यस्य पूर्वपदसमभिव्याहारेणैव बोधकत्वात्तत्त्वाभावेन तादृशसमुदायत्वस्य समासत्वव्यापकत्वानापत्तिरिति वाच्यम्, विभक्तीतरपदार्थे पूर्वपदेतरत्वस्य विशेषणत्वात्। न च प्रभवतीति वाक्ये प्रेत्यस्य भवति समभिव्याहारेण बोधकत्वात्तत्त्वाभावेन नियमानाक्रान्ततया प्रातिपदिकत्वापत्तिरिति वाच्यं; यत्किञ्चित्समुदायविशिष्टत्वस्यैव तत्त्वात्। वैशिष्ट्यञ्च—स्वघटकत्वघटकप्रकृतिकप्रत्ययेतरत्वस्वविशिष्टसमभिव्याहारानपेक्षबोधजनकत्वैतत्त्रितयसम्बन्धेन। तत्र वैशिष्ट्यं—स्वनिष्ठसंज्ञाफलभूतविभक्तीतरत्वस्वाघटकत्वोभयसम्बन्धेन। राज्ञः पुरुष इत्यादिसमुदायमादाय तद्घटकपूर्वोत्तरभागे समन्वयः कर्त्तव्यः। प्रभवति पञ्चगवधनः कुम्भकार इत्यादौ भवति धनकुम्भापेक्षबोधजनकत्वस्य प्रादीनां सत्त्वेऽपि भवतीत्यादीनां तत्समुदायाघटकत्वाभावात् कुम्भकारेति समासप्रकृतिकविभक्तिसापेक्षबोधजनकत्वेन कारेत्यस्य तत्त्वानापत्त्या स्वनिष्ठसंज्ञाफलेत्यादि देवदत्तो गार्ग्य इत्यत्र देवदत्तो गार्ग्येतिसमुदायविशिष्टो गार्ग्यप्रकृतिकः सुप्रत्ययस्तत्समभिव्याहारेणैव बोधकत्वात्तत्त्वाभावेन न प्रत्ययग्रहणपरिभाषा प्रयोजनपरभाष्यासंगतिः। रामेति समुदायघटकरामेत्यनयोस्तत्त्वापत्तिवारणाय स्वाघटकत्वस्थाने स्वघटकपदभिन्नत्वन्देयम्।

नन्वेवं देवत्तेन कृतमित्यत्र देवदत्तेन कृतेत्यस्य कृद्ग्रहणपरिभाषया कृदन्ततदादितया प्रातिपदिकत्वापत्तिः, कृतेत्यस्योक्तयुक्त्या तत्त्वाभावेन नियमानाक्रान्तत्वात्। देवदत्तो गार्ग्येतिवद्देवदत्तेन कृतेत्यस्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्यर्थवदन्तत्वाच्चेति चेत्—

अत्रोच्यते–देवदत्तेन कृतमित्यत्र कृतप्रकृतिकविभक्त्यर्थसंख्यान्वयात्प्रागेव देवदत्तेनेत्यस्य कृधात्वर्थेऽन्वयो धातुना क्रियायास्साध्यत्वेन भानात्साध्यस्य च साधनाकाङ्क्षत्वात्, तदुत्तरं देवदत्तकर्तृककरणकर्म्मत्वावच्छिन्ने देवदत्तेन कृतेत्येतत्प्रतिपाद्ये कृतप्रकृतिकविभक्त्यर्थसंख्याया अन्वयः। देवदत्तो गार्ग्य इत्यत्र च समानविभक्तिकप्रातिपदिकार्थेऽभेदान्वयादन्तरङ्गत्वात् गार्ग्यपदार्थे गर्गापत्ये विभक्त्यर्थान्वये एव देवदत्तस्यैकत्वविशिष्टे गर्गापत्येऽन्वयः। स्वनिष्ठसंज्ञाफलभूतविभक्तीत्यस्य स्थाने स्वप्रतिपाद्यतावच्छेदकधर्म्मावच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकविभक्तीति देयम्। तथा च देवदत्तेन कृतेत्येतत्प्रतिपाद्यतावच्छेदकदेवदत्तकर्तृककरणकर्म्मत्वावच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वमेव कृतपदोत्तरविभक्तेस्तदितरानपेक्षयैव वोधकत्वात् कृतेत्यस्य तत्त्वम्। देवदत्तो गार्ग्येत्येतत्प्रतिपाद्यतावच्छेदकमेव नास्ति। तदवच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वं तु सुतरां गार्ग्यप्रकृतिके प्रत्यये नास्तीति तदितरत्वमेव तस्य तदपेक्षयैव च गार्ग्यस्य वोधकत्वात्तत्त्वाभाव इति तयोर्वैषम्येनादोषादित्यलम्॥

## १२. सरूपाणामेकशेष एकविभक्तौ १।२।६४

एकविभक्ताविति सारूप्ये उपलक्षणं न तु एकशेषे विशेषणन्तथा चैकविभक्तौ सरूपाण्येव यानि प्रातिपदिकानि तेषामेकः शिष्यते इत्यर्थ इत्यनैमित्तिकत्वेन विभक्त्युत्पत्तेः प्रागेवैकशेषः एकविभक्तावित्यस्याभावे हरितवर्णवाचकहरिणीशब्दहरिणस्त्रीवाचकहरिणीशब्दयोस्तद्धितादौ वैरूप्येणैकशेपानापत्तिः। वृद्धो यूनेति सूत्रादेवकारापकर्षस्तदभावे जननीवाचकमातृशब्दपरिच्छेत्तृवाचकमातृशब्दयोर्भ्यामादावेकविभक्तौ सारूप्यादेकशेषापत्तिः। तत्सत्त्वे तु न औजसादौ वैरूप्यस्यापि सत्त्वात्। अथैवकारार्थस्य क्वान्वयः? न सरूपपदार्थे सरूपारब्धसमुदाये तथा सति सरूपारब्धसमुदायघटकस्सरूपारब्धसमुदायेतराघटक एकश्शिष्यत इत्यर्थे मातृमात्रोरापत्तिवारणाभावादेवकारापकर्षणस्य वैयर्थ्यापत्तेर्न वा सरूपेऽन्वयस्तावतापि सरूपारब्धस्सरूपेतरानारब्धो यस्समुदायस्तद्घटक इत्यर्थे नोक्तापत्तेरवारणात्। एकमातृशब्दस्यापरमातृशब्दसरूपत्वेन सरूपेतरत्वाभावान्नापि सारूप्येऽन्वयस्तथा च सारूप्यमेव येषान्तैरारब्धो यस्समुदा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्तद्घटक इत्यर्थस्सारूप्यवान् यः सारूप्येतराभाववान् तदारब्धसमुदाय-घटक इति यावत्तेनाप्युक्तापत्तेरवारणात्। एकस्यैव मातृशब्दस्य च सारूप्यं स्वसारूप्येतराभाववत्त्वञ्च वर्त्तत एव। तदारब्धश्च मातृमातृसमुदायस्त-द्घटकत्वान्मातृशब्दस्येति चेत्—अत्रोच्यते—सरूपाणामेक इत्यस्य शब्दविशिष्टसमुदायघटक एकः शिष्यत इत्यर्थः। वैशिष्ट्यञ्च स्वघटित-त्वस्ववृत्तिरूपाभाववदघटितत्वोभयसम्बन्धेनास्मिँश्चार्थे मातृमातृसमुदाय एकशेषः प्राप्तस्स्ववृत्तिरूपवत्त्वसत्त्वे स्ववृत्तिरूपाभाववत्त्वस्याभावात् स्ववृत्तिरूपाभाववान्मातृशब्दो नापि तु घटादिस्तदघटितत्वात्। अत एवकारस्य सम्बन्धस्स च सरूपपदस्य शब्दविशिष्टस्समुदायोऽर्थ इत्यत्र तात्पर्यग्राहकः। वैशिष्ट्यञ्च—स्वारब्धत्वस्ववृत्तिरूपविशिष्टरूपवदनार-ब्धत्वोभयसम्बन्धेन। तत्र वैशिष्ट्यं स्वभिन्नत्वस्वाश्रयप्रकृतिकविभक्तिस-जातीयविभक्त्यव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेन। द्वितीयसम्बन्धे तात्प-र्य्यग्राहकमेकविभक्ताविति पदम् मातृमातृसमुदाये एकस्यां विभक्तौ परे मातारत्वमपरस्यां तस्याम्मातरत्वन्तयोर्भिन्नत्वमेकविभक्त्यव्यवहितपूर्व-वृत्तित्वञ्चेति न तत्रैकशेषः। न च जराशब्दे एकशेषानापत्तिरेकस्य ङे परे जरस्त्वमपरस्य ङे परे जरात्वं, जरसादेशस्य वैकल्पिकत्वात्। तथा च स्ववृत्तिरूपं जरस्त्वं तद्विशिष्टमुक्तोभयसम्बन्धेन जरात्वं तद्वज्जराशब्द-स्तदनारब्धत्वाभावादिति वाच्यं, स्वभिन्नत्वस्थाने स्वविशिष्टभिन्नत्वसम्ब-न्धस्य विवक्षितत्वात्। वैशिष्ट्यञ्च—स्वसमानाधिकरण्यस्वाश्रयप्रकृतिक-विभक्तिसजातीयविभक्त्यव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेन। तथा च यस्य जराशब्दस्य यस्यां विभक्तौ जरस्त्वं तस्य तस्यां विभक्तौ जरात्वमपीति भवति जरस्त्वरूपविशिष्टमुक्तोभयसम्बन्धेन जरात्वं तद्भिन्नत्वं जरात्वे नास्ति नापि जरस्त्वरूपविशिष्टभिन्नत्वं जरस्त्वे। एवं जरात्वरूपविशिष्ट-भिन्नत्वमपि जरस्त्वे जरात्वे वा नास्तीति स्ववृत्तिरूपस्य स्वविशिष्टभिन्न-त्वस्वाश्रयप्रकृतिकविभक्तिसजातीयविभक्त्यव्यवहितपूर्ववृत्तित्वोभयसम्ब-न्धेन। विशिष्टं घटत्वादिकमेव तद्वदनारब्धत्वस्य जराजरासमुदाये सत्त्वादेकशेषसिद्धेः। ननु नित्यबहुवचनान्तदारशब्दस्य सर्ववचनान्तदार-शब्देन सहैकशेषापत्तिरिति चेन्नेष्टत्वेनापत्त्यभावात्। न च संज्ञाभूतसर्व-शब्दस्य सर्वनामसर्वशब्देन सहैकशेषानापत्तिरिति वाच्यन्तत्रानिष्टत्वेना-पत्त्यभावात्। न च नित्यद्विवचनान्तपुष्पवन्तशब्दस्य नित्यैकवचनान्तै-कशब्देन सहैकशेषापत्तिरिति वाच्यं, स्ववृत्तिरूपाभाववदनारब्धत्वस्यापि तृतीयसम्बन्धस्य शब्दवैशिष्ट्यनियामकतयाभ्युपगमेनापत्त्यभावात्। तथा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च स्वारब्धत्वस्ववृत्तिरूपविशिष्टरूपवदनारब्धत्वस्ववृत्तिरूपाभाववदनारब्धत्वैतत्त्रितयसम्बन्धेन शब्दविशिष्टसमुदायघटक एकश्शिष्यते। सम्बन्धघटकवैशिष्ट्यञ्च—स्वविशिष्टभिन्नत्वस्वाश्रयप्रकृतिकविभक्तिसजातीयविभक्त्यव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेन। पुनर्वैशिष्ट्यं—स्वसामानाधिकरण्यस्वाश्रयप्रकृतिकविभक्तिसजातीयविभक्त्यव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेनेति निष्कर्षः।

उद्भूतावयवभेदकघटसमुदायादौ घटादिपदस्य शक्तत्वादेकशेषं विनापि घटौ घटा इत्यादयः प्रयोगाः। पृथ्वीशान्तिसमुदायनिरूपितशक्तेः क्षमाशब्दे सत्त्वेन तादृशंसमुदायबोधनेच्छया क्षमयोरितिप्रयोग एकशेषं विनापि सिद्धः। तादृशसमुदाये घटघटेत्यस्य क्षमाक्षमेत्यस्य च शक्त्यभावात् प्रत्यर्थं शब्दाभिनिवेश इत्यभ्युपगमेऽपि न घटघटावित्यादयः क्षमाक्षमे इत्यादयश्च प्रयोगा इति सरूपाणामित्यस्य प्रत्याख्यानम्। एवमेवैकशेषविधायकानि सर्वाणि शास्त्राणि प्रत्याख्यातानि॥

## १३. अट्कुप्वाङ्नुम्व्यवायेऽपि ८।४।२

रेफषकाराभ्यां परस्य नस्य णत्वं भवत्यट्कवर्गपवर्गाङ्नुम्भिर्व्यवाये ताभ्यामव्यवहितोत्तरस्य च नस्य णत्वमित्यर्थः। अपिशब्दो रषाभ्यां नो णस्समानपदे इत्यर्थसमुच्चायकः। नन्वादर्शेनेत्यत्राटा व्यवायसत्त्वान्नस्य णत्वं स्यात्। नन्वडाद्यतिरिक्तव्यवायान्न णत्वमिति वाच्यमडादिव्यवाये णत्वमित्यर्थस्यैव सूत्रतो लाभेनाडाद्यतिरिक्तव्यवाये न णत्वमित्यर्थस्य चालाभेनाडाद्यतिरिक्तव्यवायस्य बाधकत्वाभावादिति चेत्-न। रषाभ्यामिति पञ्चमीनिर्देशेनोपस्थितया तस्मादित्युत्तरस्येति परिभाषया रेफषकाराव्यवहितोत्तरत्वं नकारे विशेषणमुपस्थाप्यते। ततश्च रेफनकारयोः षकारनकारयोश्च वर्णान्तरकर्तृकव्यवधानशून्यत्वं लब्धम्। अट्कुप्वाङ्नुम्व्यवाये इत्यनेनाडादिवर्णकर्तृकव्यवधानवत्त्वं लब्धम्। तथा च रेफषकाराभ्यामव्यवहितोत्तरस्य सतोऽडादिव्यवहितस्य नस्य णत्वमित्यर्थः पर्य्यवसन्नः। व्यवहिताव्यवहितत्वस्य विरोधात्सूत्रं व्यर्थं स्यादतोऽट्कुप्वाङ्नुम्व्यवायेऽपीत्यनेन वर्णान्तरेऽडाद्यतिरिक्तत्वमात्रं बोध्यते। ततश्चाट्कुप्वाङ्नुम्भिन्नवर्णकर्तृकव्यवधानशून्यस्य रषाभ्याम्परस्य नस्य णत्वमिति पर्य्यवसितम्। तेनादर्शेनेत्यादावडाद्यतिरिक्तशकारव्यवायान्न णत्वम्। एतदेवाभिप्रेत्य भाष्यकृतोक्तम्—'णत्वेऽन्यव्यवाये प्रतिषेधो वक्तव्यो न वाऽन्येन व्यवहितत्वादि'ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयं प्रकारः **शेखरकारस्य** । **भाष्ये** चुटुतुलशर्व्यवायेनेत्येव सिद्धे अट्कुप्वाङ्नुमित्युक्त्याऽटैव व्यवाय इत्यर्थो बोध्यते । तेनादर्शेनेत्यत्र णत्वं वारितम् । तच्च **शेखरकारै**रेकदेश्युक्तमित्युक्तम् । तत्र हेतुरुक्तः निषेधे प्रतियोगिज्ञानस्यापेक्षणात् मात्राणां साम्याच्च क्रियमाणन्यासस्य गुरुत्वात्तेन कृतन्यासवैयर्थ्योद्भावनमयुक्तमिति । **भाष्ये** ऋवर्णान्तस्य णत्वं वाच्यमित्यस्य प्रत्याख्यानाय व्यवाये इति योगः व्यवाये णत्वमिति तदर्थस्तेन मातॄणामित्यादौ ऋकारैकदेशाज्भागव्यवहितस्य रेफात्परस्य नस्य णत्वसिद्धिरनेनैव योगेन सिद्धेऽट्कुप्वाङ्नुमिति **आक्षरसमाम्नायिकै**र्व्यवाये चेदडादिभिरेव व्यवाय इति नियमार्थन्तदा आदर्शेनेत्यादौ न णत्वप्राप्तिरित्यपि **शेखरे** उक्तम् ।

अत्रेदं क्रमेण विचार्य्यते । परिभाषोपस्थापिताव्यवहितपदार्थैकदेशव्यवधानकर्तृतयाक्षिप्तवर्णेऽडाद्यतिरिक्तत्वेन संकोचेऽडाद्यतिरिक्तवर्णकर्तृकव्यवधानशून्यस्य नस्येत्यर्थेऽधिकपदार्थावगाहनाद्गौरवं स्यादतो विरोधे सति श्रौतेनाट्कुप्वाङ्नुम्व्यवाये इत्यनेन ङ्याप्प्रातिपदिकादित्यादौ षष्ठ्यर्थांशस्येवात्राव्यवहितत्वांशस्य बाध एव युक्तस्तथा सति अडादिव्यवहितस्य नस्येत्यर्थेन बोधेऽल्पपदार्थावगाहनाल्लाघवम् । किञ्च वर्णस्याक्षिप्तत्वेन शाब्दबोधे भानस्यैव सन्दिग्धत्वेन तत्र संकोचस्य शाब्दिकशैलीविरुद्धत्वम् । किञ्च वर्णे तथा संकोचे रषाभ्यामिति सूत्रं व्यर्थं, न चात्र सम्बन्धार्थं सूत्रमिति वाच्यन्तावतापि योगविभागवैयर्थ्यस्य तादवस्थ्यात् **शेखरोक्तप्रकारो** न युक्तः । यच्च भाष्योक्तमेकदेश्युक्ततया तिरस्कृतं **शेखरकृता** तत्पर्य्यालोच्यताम् । चुटुतुलशर्व्यवायेनेति वाक्यं चेद्वैयर्थ्योपपादकन्तदा गौरवन्तदेव न अस्य हि एतैः प्रत्येकं यथासम्भवमिलितैर्वा व्यवायेनेत्यर्थः । एतैरेव व्यवायेनेत्यर्थो वा न प्रत्येकमिति पक्षः मृत्स्नेत्यादौ चवर्गादिद्वयव्यवधाने णत्वापत्तेर्न्न यथासम्भवमिलितैरिति पक्षस्तथासत्यादर्शेनेत्यत्र फलभेदस्सिद्धान्ते णत्वप्राप्तेरिदानीमप्राप्तेश्च नाप्येतैरेवेति पक्षः । आदर्शेनेत्यत्र फलभेदाभावेऽपि चुटुग्रहणस्य वैयर्थ्यापत्तेः, चवर्गमात्रव्यवाये टवर्गमात्रव्यवाये उदाहरणस्यैवाभावात् । आह्नोत मूर्ध्नः कृत्स्नः मृत्स्नेत्युदाहरणस्यैव लाभात् । तस्मात् तुशर्व्यवायेनेत्येव वैयर्थ्योपपादकं एतावन्मात्रव्यवायेनेत्यर्थः । पदव्यवायेनेत्यस्यानन्तरमस्य पाठेन नेत्यपि न वक्तव्यम् । तथा च लाघवसत्त्वेन वैयर्थ्योपपादकत्वं युक्तमेवेति नैकदेश्युक्तत्वम् । **भाष्ये** चुटुतुलशर्व्यवायेनेत्युक्तिस्तु अडादिभिरेव व्यवाये णत्वमित्यर्थात् यत्र न भवति तत्प्रदर्शनार्थेति अयमेव पक्षो युक्तः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इदानीं तृतीयः पक्षो विचार्य्यते-नियमाकारस्तु आक्षरसमाम्नायिकै-र्व्यवाये चेत्-एतैरेवाडादिभिरिति। ततश्च मातृणामित्यादौ वर्णैकदेशेन व्यवायेऽप्याक्षरसमाम्नायिकैर्व्यवायाभावान्न नियमेन व्यावृत्तिः। आद्धूनो-दित्यादौ चाक्षरसमाम्नायिकैर्व्यवायसत्त्वान्नियमेन व्यावृत्तिरेवमादर्शे-नेत्यादावप्याक्षरसमाम्नायिकैर्व्यवायादडादिभिरेव व्यवायाभावान्न णत्वं रामेणेत्यादावेतैरेव व्यवायाण्णत्वमुपपद्यत इति शेखरकृन्मतम्।

अत्रेदं दृश्यतां—नियमेनान्यस्य व्यावृत्तिर्भवति न तु स्वीयोद्देश्यताव-च्छेदकधर्म्मावच्छिन्नस्य कस्यचित् यथा समासग्रहणनियमेन समासाति-रिक्तस्य वाक्यस्यैव व्यावृत्तिर्न्न तु स्वीयोद्देश्यतावच्छेदकावच्छिन्नस्य कस्य चिदेवं धातोस्तन्निमित्तस्यैवेत्यनेन यादिप्रत्ययनिमित्तस्य धातुसम्बन्ध्येचो न व्यावृत्तिरपि त्वन्यस्यैवौयत औयत इत्यादेरेवमनेनापि नियमेन स्वीयोद्देश्य-तावच्छेदकं यदडादिव्यवहितत्वं तदवच्छिन्नातिरिक्तस्यैवाद्धूनोदित्यादे-र्व्यावृत्तिस्स्यान्न तु तदवच्छिन्नस्यादर्शेनेत्यस्येति तत्र णत्वं स्यादेवेत्या-दर्शेनेत्यादौ तु प्राप्तिरेव नेति शेखरोक्तं चिन्त्यमेवैतत्फलितमेव नियम-स्थले व्यर्थशास्त्रीयोद्देश्यतावच्छेदकव्यापकं व्यर्थताप्रयोजकशास्त्रीयो-द्देश्यतावच्छेदकव्याप्यं यद्रूपं तदवच्छिन्नातिरिक्तत्वेन व्यर्थताप्रयोजक-शास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचं कृत्वा स्वीयोद्देश्यतावच्छेदका-वच्छिन्ने शास्त्रान्तरेणाप्राप्तं कार्यं विधत्ते नियमशास्त्रम्। समन्वयोऽन्यत्र स्पष्ट इति दिक्॥

## १४. नामि ६।४।३

अत्राङ्गग्रहणाभावे चर्म्मणामित्यादौ मकाराकारस्य दीर्घापत्तिः। न चार्थवद्ग्रहणपरिभाषयाऽर्थवन्नामो ग्रहणेनानर्थकत्वान्न दोष इति वाच्यम्। नमूधातोः क्विप्यनुनासिकस्येति दीर्घे देवदत्तनामित्यादौ दीर्घा-पत्तेरतो भिस् इत्यत्राङ्गग्रहणाभावे ब्राह्मण भिस्सेत्यत्र दोषदानपरभा-ष्येणात्र प्रकरणेऽर्थवत्परिभाषाया अप्रवृत्तिबोधनाद्यान्यथाऽनर्थकस्य भिसोऽग्रहणेन भाष्यासङ्गत्यापत्तेरत एव भाष्यात्प्रत्ययाप्रत्यययोः प्रत्यय-स्यैव ग्रहणमित्यस्याप्यभाव एवेति न तयाऽप्रत्ययस्याग्रहणाददोष इति शंका न पदान्ताट्टेरनामिति निर्देशादप्रत्ययस्य न ग्रहणमित्यपि न। अप्र-त्ययेऽकारस्य नानेन दीर्घ इति कल्पनयापि निर्देशोपपत्तौ हरिनामित्यादौ दोषतादवस्थ्यात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वामीत्येवास्तु परत्वान्नुटि यदागमन्यायेनामृत्वमादाय दीर्घे रामाणामित्यादेरिसद्धत्वात्। न च कृताकृतप्रसङ्गित्वेन नित्यत्वाद्दीर्घे ह्रस्वान्तत्वाभावेन रामाणामित्यादौ नुट् न स्यादिति वाच्यम्। ह्रस्वात्परस्यामो नुडित्यस्यैवं सति वैयर्थ्येन सामर्थ्याद्भूतपूर्वह्रस्वान्तत्वमादाय नुट उपपत्तेः नृणामित्यत्र नृ चेति दीर्घाभावे नुटश्चारितार्थ्याद्वैयर्थ्याभाव इति तु न वाच्यम्, तावन्मात्रप्रयोजनकत्वे नृनद्याप इत्यनेनैव सिद्धौ ह्रस्वग्रहणवैयर्थ्यस्य तावतापि सत्त्वात् तदुक्तं-न ह्येकमुदाहरणं योगारम्भं प्रयोजयतीति। एकमुदाहरणं सामान्यरूपेण योगारम्भे प्रयोजकं न भवतीति तदर्थः। विशेषरूपेण निर्देशेऽपि तदुदाहरणोपपत्तिसम्भवात्सामान्यरूपेण निर्देशो व्यर्थ एवेति तदाशय इत्युक्तं शेखरे।

अत्रेत्थं विचार्य्यते——ह्रस्वग्रहणे प्रतिपदोक्तत्वात् नृ चेति दीर्घे यणि नामिति दीर्घाभावे नुटि नृणामिति रूपद्वयम्। नृनद्याप इति करणे नित्यत्वप्रतिपदोक्तत्वयोरुभयत्र साम्यात् परत्वान्नुटि दीर्घे नॄणामिति दीर्घाभावे नृणामिति रूपद्वयमिति फलभेदान्नृग्रहणेन ह्रस्वग्रहणस्य न वैयर्थ्यमिति चेत्—उच्यते—नृनद्याप इत्यस्याप्राप्तियोग्येऽचारितार्थ्येन कृते नुटि चारितार्थ्येन तक्रन्यायेन नुटं बाधित्वा दीर्घे सर्वेषामित्यादौ सुटीव नुटोऽप्रवृत्तौ यणि नामिति दीर्घाभावे नुटि नृणामिति न फलभेदः। नुट् तु नोक्तन्यायेन दीर्घबाधकः। वैकल्पिकत्वेन दीर्घाभावे नुटश्चारितार्थ्यात्। बाधे नृ चेत्यस्य वैयर्थ्यापत्तेश्च। न च प्राप्तविभाषास्थले अभावस्यैवापूर्वत्वेन विधेयत्वात्तेनैव बाध्यबाधकभावविचारः। तथा सति ह्रस्वग्रहणे नुटोऽप्राप्तियोग्ये अचारितार्थ्येन कृते नुटि चारितार्थ्येन तक्रन्यायेन बाधकेऽभावे जाते नुटोऽप्राप्त्या यणि नामिति पक्षे दीर्घे नित्यत्वाज्जाते नुटोऽप्राप्त्या यणि नामिति रूपमेकं नृनद्याप इति कल्पे उक्तरीत्या तक्रन्यायेन दीर्घाभावे नुटोऽप्रवृत्तौ यणि नामिति वैकल्पिकत्वात् पक्षे दीर्घेऽपि नृत्वान्नुटि नॄणामिति फलभेदो दुरुद्धर इति वाच्यम्। नः ऋत् नॄदिति पठित्वा नृसम्बन्धिह्रस्वऋकारात्परस्य नुडित्यर्थेन दीर्घे नुटोऽप्राप्त्या यणि नामित्यस्यैव सत्त्वेन फलभेदाभावात्। अभावविधानपक्षेऽप्यभावस्य न नुड्बाधकत्वसम्भावविधानवैयर्थ्यापत्तेश्च। एतेन नृशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि तुकि निष्पन्ननृच्छब्दादामि नृतामिति ह्रस्वग्रहणे तु नुटि नृणामिति फलभेद इत्यपास्तम्। नृदिति करणेन तान्ते यदागमन्यायेनापि नृशब्दसंबन्धिह्रस्व—ऋकारान्तत्वस्यानयनाभावेन नृतामित्यादौ नुटोऽप्राप्तेः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वेवमपि तिसृणामित्यादौ न तिसृ इति निषेधे ह्रस्वग्रहणचारितार्थ्यमिति चेत्-न, षट्चतुर्भ्यश्चेत्यत्र त्रेरित्यनुवृत्त्या त्रिशब्दात्परस्याप्यामो नुड्विधानेन तिसृणामित्यस्य सिद्धेः। न च त्रिशब्दादाचारक्विवन्तात् कर्त्तरि क्विपि त्रितामित्यादौ नुडापत्तिः, षट्चतुस्साहचर्य्येणातकारान्तस्यैव त्रिशब्दस्य ग्रहणेनादोषात्। न च त्रिशब्दस्येकारेण समासे दीर्घे तत आमि त्री आमिति स्थिते ह्रस्वग्रहणे न भवति त्रिग्रहणे पूर्वान्तवद्भावेन स्यादिति फलभेद इति वाच्यम्, पञ्चमीसमासमाश्रित्य ह्रस्वग्रहणेऽपि नुटः प्रवृत्तेः फलैक्यात्। न च दीर्घेकारेण समासे फलभेदः, पञ्चमीसमासाश्रयणेनैव त्रिग्रहणेऽपि तत्र नुटोऽभावस्योपपादयितुं शक्यत्वात्। न च प्रियत्रीणामित्यादौ षट्चतुर्भ्यश्चेति बहुवचननिर्देशेनार्थपरनिर्देशात् षडाद्यर्थगतबहुत्वबोधकस्यामो नुडित्यर्थेन गौणेऽप्रवृत्त्या नुडर्थं ह्रस्वग्रहणमस्त्विति वाच्यम्। षट्चतुर्भ्यामिति निर्देशे गौरवेण लाघवार्थं बहुवचनस्य सत्त्वेन गौणेऽप्रवृत्तौ प्रमाणाभावात् समाहारद्वन्द्वेनैकवचने कर्तव्ये बहुवचनं गौणेऽप्रवृत्त्यर्थमित्यपि न तथा अस्थिदधीत्यादावपि बहुवचनस्यासंगत्यापत्तेः।

न चाङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवतीति भाष्याद्गौणेऽप्रवृत्तिः गृह्यमाणविभक्तेरित्यस्य हि गृह्यमाणात् सूत्रे उच्चार्य्यमाणाद्विहितविभक्तेरित्यर्थः। नन्वेतदर्थे षड्भ्यो लुगित्यत्राप्यङ्गाधिकारसत्त्वेन षट्संज्ञकाद्विहितयोरेव जश्शसोर्लुकि परमपञ्चेत्यत्र लुग् न स्यात् नान्तसंख्यावाचकत्वस्य पञ्चमात्रे सत्त्वेन तस्यैव षट्त्वेन ततो विहितत्वाभावादिति चेत्-न। संख्याप्रकारकसंख्येयमुख्यविशेष्यकबोधजनकस्य षान्तस्य नान्तस्य च षट्संज्ञेत्यर्थेन परमपञ्चेत्यस्य कर्म्मधारयसमासेन परमाभिन्नपञ्चत्वसंख्याविशिष्टार्थकत्वेन तस्यैव षट्त्वेन ततो विहितस्य जशो लुग्विधाने बाधकाभावात् लोके संख्यावाचकत्वेन प्रसिद्धस्यैव षट्त्वमित्यर्थप्रमाणाभावात् भाष्येऽपि निरुक्तशङ्कायास्समाधानपरेण षट्प्रधान एष समास इति ग्रन्थेनोक्तार्थस्यैव ध्वननादिति वाच्यम्, न ह्येकमुदाहरणमिति नामिसूत्रस्थभाष्यात् षट्संज्ञकादिभ्यः परस्याङ्गसंज्ञानिमित्तस्यामो नुडित्यर्थस्यैव सत्त्वेन गौणेऽपि नुटः प्रवृत्तेः। अत एव परमचतुर्णामित्यत्र नुट् षड्भ्यो लुक् अदड्डतरादिभ्यः पञ्चभ्य इति सूत्रद्वयस्यैव लक्ष्यानुरोधात् षट्संज्ञकाद्विहितयोः डतराद्यन्ततदादिविहितयोरित्यर्थः। तेन प्रियपञ्चानः अतिकतरमित्यादौ न लुगदडौ। न च पदां दतामित्यादावपि स्थानिगतह्रस्वान्तत्वं भूतपूर्वगत्याऽऽदाय नुट्प्रसंग इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाच्यं, मात्राकालिकत्वे सत्यच्त्वस्यैव ह्रस्वपदशक्यतावच्छेदकतया सामर्थ्यान्मात्राकालिकत्वांश एव भूतपूर्वगत्याश्रयणेनाच्त्वस्य विद्यमानस्यैव निमित्तत्वेन प्रकृते तदभावेनादोषात्।

अत्रोच्यते—एवं सति नोपधाया इत्यत्राप्यामीत्यस्यैव सम्बन्धे चर्मणामित्यादौ मकाराकारस्य दीर्घापत्त्या नामीति वक्तव्यमिति। अत्रेदं विचार्य्यते—संख्याप्रकारकसंख्येयनिष्ठविशेष्यताकबोधजनकस्य षट्संज्ञकत्वे दण्डिन इव त्रयः त्रिदण्डिनः, पूषाण इव त्रयः त्रिपूषाणः, पञ्च इव त्रयः त्रिपञ्चान इत्यादावुपमितसमासे उक्तसंख्याबोधकत्वस्य सत्त्वेन षट्संज्ञापत्त्या लुगापत्तिरतो लोके संख्यावाचकत्वेन प्रसिद्धस्य पञ्चादेरेव सा प्रियपञ्चान इत्यादौ लुगभावाय षड्भ्य इत्यस्य षडर्थगतसंख्याभिधायिनोर्ज्जश्शसोर्लुगित्येवार्थो गृह्यमाणविभक्तेस्तद्भवतीत्यस्य गृह्यमाणार्थगतसंख्याभिधायिविभक्तेस्तद्भवतीत्येवार्थ इति नोक्तोपमितसमासेष्वपि दोषः। षट्प्रधान एष समास इति भाष्यस्याप्यत्रैव तात्पर्य्यम्। शेखरोक्तं च न युक्तमिति चेत्—न। तवापि दण्डिन इव कति कतिदण्डिन इत्यादौ लुगापत्तिः। षडर्थगतसंख्याभिधायित्वस्य जशस्सत्त्वात् इष्टापत्तौ ममाप्युक्तस्थलेषु इष्टापत्तिरेव। न च षड्भ्य इत्यस्यावृत्त्या षट्संज्ञकात्परस्येत्यप्यर्थस्तथा च षडर्थगतसंख्याभिधायिनोः षट्संज्ञकात्परयोरित्यर्थेन कतिदण्डिन इत्यादौ न दोषो जसः षट्संज्ञकात्परत्वाभावात्। अत एव पञ्चब्राह्मणा इत्यादावपि ब्राह्मणपदोत्तरविभक्तेर्न्न लुक्। प्रियपञ्चानः पञ्चेत्यादौ प्रियपञ्चन्प्रकृतिकविभक्तेः षट्संज्ञकात्परत्वस्य पञ्चरूपषडर्थगतसंख्याभिधायित्वस्य च सत्त्वेऽपि प्रत्यासत्त्योभयत्रैकस्यैव षट्संज्ञकस्य ग्रहणे नादोषादत्र तयोर्भेदात् स्वार्थगतसंख्याभिधायित्वस्वाव्यवहितोत्तरत्वोभयसम्बन्धेन षट्संज्ञकविशिष्टयोर्लुगिति निष्कर्ष इति वाच्यम्। ममापि संख्याविशिष्टस्य षट्संज्ञेत्येवार्थः। वैशिष्ट्यञ्च स्वनिष्ठप्रकारतानिरूपितसंख्येयनिष्ठमुख्यविशेष्यताकबोधजनकत्वस्वपर्य्याप्तावच्छेदकतानिरूपितावच्छेद्यतावच्छक्यतानिरूपितशक्ततापर्य्याप्त्यधिकरणपान्तनान्तान्यतरशब्दनिष्ठचरमावयवतानिरूपकत्वोभयसम्बन्धेन। विशेष्यतायां मुख्यत्वं च स्वप्रयोजकपदप्रयोज्यविशेष्यतानिरूपितप्रकारत्वासामानाधिकरण्यम्। तेन पञ्चब्राह्मणा इत्यत्र ब्राह्मणविशेषणत्वेपि न क्षतिः। त्रिदण्डिन इत्यादौ च त्रित्वावच्छिन्नशक्यतानिरूपितशक्ततावान् नान्तः शब्दो नास्तीति न दोषः। पञ्चेव षट् षट्पञ्चान इत्यादौ नैवेष्यते षट्संज्ञा तवापि ममापीति शेखरमते न दोषः। न च शेखरमते परमपञ्चेत्यस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षट्संज्ञायां स्वं रूपं शब्दस्येति सूत्रस्था शब्दसंज्ञेत्यस्य प्रत्याख्यानाय संज्ञाया: स्वरूपबोधकत्वाभाव: पान्तस्य संख्यावाचकस्य षट्संज्ञाविधानसामर्थ्येन ज्ञापित:। संज्ञाशब्दस्य स्वरूपबोधकत्वे हि षडित्यादौ षड्भ्यो लुगित्यादीनां षान्तस्य संख्यावाचकस्य षट्संज्ञां विनैव षट्स्वरूपत्वादेव प्रवृत्त्या तस्य तत्संज्ञाविधानवैयर्थ्यं स्पष्टमेवेति भाष्यविरोध:। षट्शब्दस्य स्वरूपबोधकत्वेऽपि परमपञ्चेत्यस्य षट्स्वरूपत्वाभावात्तस्य संज्ञार्थं संज्ञाविधानस्यावश्यकत्वेन वैयर्थ्याभावादिति वाच्यम्। पञ्चेत्यादौ लुगाद्यर्थं षट्संज्ञकेत्यर्थस्यावश्यकत्वेन सकृदुच्चरितन्यायेन षट्स्वरूपबोधकत्वासम्भवेन संज्ञाविधानस्यावश्यकत्वात्। पशवपत्यादिशब्दस्येव संज्ञाया अपि लक्ष्यानुसारादेव स्वरूपबोधकत्वाभावोपपत्तेश्च ज्ञापकपरभाष्यस्यैकदेश्युक्तत्वेनादोषात्। न च गृह्यमाणाद्विहितविभक्तेरित्यर्थे उपसर्जनप्रतिषेधो वक्तव्योऽथ वा अङ्गाधिकारे पञ्चम्या यदुच्यते गृह्यमाणविभक्तेस्तद्भवतीति भाष्योक्त्या अङ्गाधिकार इति कल्पे उपसर्जनप्रतिषेधाभावेनातिसर्वायेत्यत्र स्मा आदेशाभावाय सर्वनामविहितस्य ङेरित्यर्थेन परमसर्वस्मै इत्यस्यासिद्धि:। कैयटमते सर्वनामार्थगतसंख्याभिधायीत्यर्थे न दोषो भवति। न च सर्वनामसंज्ञायां तदन्तविधिसत्त्वात्। नागेशमतेऽपि न दोष: परमसर्वेत्यस्यैव सर्वनामत्वादिति वाच्यमस्मिन् कल्पे तदन्तविध्यभावात् कथमन्यथा अतिसर्वायेत्यत्र स्मैभावाभाव इति वाच्यं, एतद्दोषेणैवैतत्कल्पस्यैकदेश्युक्तत्वात्। अत एव भाष्ये 'अथ वा महतीयं संज्ञेति' पक्षान्तरोपादानम्। न च कैयटमतोपेक्षायां बीजाभाव इति वाच्यम्, गृह्यमाणार्थगतसंख्याभिधायीत्यर्थस्य पञ्चम्यप्रतिपाद्यत्वात्, न ह्येकमुदाहरणमिति भाष्यविरोधाच्च। शेखरमते च परमकतरमित्यादावदडादेशाभाव एष्टव्य इत्यसमञ्जसम्। यस्य कार्य्यमिष्टन्तस्य कर्मधारयेऽपि तत् कार्य्यस्य समासप्रत्ययातिरिक्तस्येष्टत्वादित्यलम्।

---

## १५. उभशब्दो नित्यं द्विवचनान्त इति

नतु द्विवचने परे सर्वनामसंज्ञाप्रयुक्तकार्य्याणामभावेन सर्वादिगणे तस्य पाठे प्रयोजनाभाव:। न च सर्वनाम्नस्तृतीया चेति सूत्रेणोभाभ्यां हेतुभ्यामुभयोर्हेत्वोरित्यादिसिद्धिरेव फलमिति वाच्यम्, निमित्तपर्य्यायप्रयोगे सर्वासां प्रायदर्शनमिति वार्त्तिकेनैव गतार्थत्वात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्य सर्वनामसंज्ञासापेक्षत्वन्तु न भाष्ये हेताविति सूत्रे पाठात्। न च स्वाङ्गशिटामित्यनेन सर्वनाम्नां विधीयमानमाद्युदात्तत्वं फलमिति वाच्यम्, उभे भद्रे इत्यादावन्तोदात्तपाठेन गणे उभशब्दस्यान्तोदात्तत्वनिपातनेनाद्युदात्तत्वस्य बाधेनान्तोदात्तत्वस्यैवेष्टत्वात्। न चास्यासर्वनामत्वे प्रथमाद्वितीययोरभावस्स्यात्, निमित्तपर्य्यायप्रयोगे सर्वासां प्रायदर्शनमितिवार्त्तिकस्थप्रायग्रहणेनासर्वनाम्नः प्रथमाद्वितीये न स्त इति बोधनादिति वाच्यम्, उभशब्दातिरिक्तसर्वनामभिन्नप्रातिपदिकात्प्रथमाद्वितीययोरभाव इति कल्पनेनादोषात्। न चोभकावित्यत्राकजर्थ एव पाठोऽस्तु कप्रत्ययेनापि तत्सिद्धेः। न चोभकाभ्यामित्यत्र सुबन्तात्तद्धितोत्पत्त्याऽकचि चितस्सप्रकृतेरित्यनेन चित्वप्रयुक्तमन्तोदात्तत्वं भ्याम आकारस्य कप्रत्यये प्रत्ययत्वप्रयुक्तमन्तोदात्तत्वं कप्रत्ययाकारस्येति फलभेद इति वाच्यं, तद्धितविधौ प्रातिपदिकाधिकारात्, प्रातिपदिकस्यैव प्रकृतित्वं प्रत्ययविध्युद्देश्यतावच्छेदकाक्रान्तस्यैव प्रकृतित्वात्। जायमानश्च तद्धितः स्वार्थे परिपूर्णमिति न्यायात्सुबन्तात्पर एवेत्यन्यदेतदिति प्रत्ययत्वचित्वाभ्यां ककाराकारस्यैवोदात्तत्वेन फलभेदाभावादिति चेत्-मैवम्। अकचि तन्मध्यपतितन्यायेनोभकशब्दस्योभशब्देन ग्रहणादुभशब्दस्यैव द्विवचनपरत्वेनायज् न भवति कप्रत्यये तु तदन्ते द्विवचनपरत्वेऽपि तस्य द्विवचनपरत्वाभावेनायच् स्यादित्युभयकाविति स्यादिष्यते चोभकाविति तदर्थं पाठस्यावश्यकत्वात्।

ननु संख्याया अवयवे तयबित्यवयवे विहितस्य तयपः स्थाने उभादुदात्तो नित्यमित्यनेनायजादेशस्य विधानेनोभकावित्यत्रावयवार्थाप्रतीत्या तयपोऽभावेनायचो न प्राप्तिरिति चेत्-अत्रोच्यते-उभये इत्यादौ तयपादेशे उभयप्रतिषेधः। तयपो ग्रहणेन ग्रहणाज्जसि विभाषा प्राप्नोतीति वार्त्तिकप्रत्याख्यानायायचः प्रत्ययान्तरत्वमुक्तं भाष्ये। तथा चोभाववयवौ यस्येति वाक्यस्य सिद्धये उभादुदात्तो नित्यमिति सूत्रे महाविभाषासम्बन्धस्यावश्यकत्वेन विरोधादेतद्वाक्यार्थबोधे नित्यपदार्थान्वयस्याविषयत्वेन नित्यमिति योगो विभज्यते। उभशब्दादवयविन्यर्थे अयज्वा स चोदात्त इत्युभादुदात्त इत्यस्यार्थः। उभशब्दात्स्वार्थे अयच् नित्यमिति नित्यमित्यस्यार्थः। तेन 'उभयपक्षविनीतनिद्रा'* इत्यादौ स्वार्थे अयच् यद्यपि

---

*रघुवंश ५।७२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योगविभागस्येष्टसिद्ध्यर्थत्वादुभौ साभ्यासस्येति लिङ्गाच्च वृत्तिविषये एवायमयच् तथापि उभयोर्वास इत्यादौ वृत्तौ शयवासवासिष्वकालादित्यलुक्यचोऽदर्शनात् द्विवचनपरत्वाभावे उभशब्दादयजित्यर्थकादुभयोऽन्यत्रेति वार्त्तिकाच्च वृत्तिविषय इत्यनुक्त्वा द्विवचनपरत्वाभावेऽयजिति वक्तव्यम्। अस्मिन् योगे महाविभाषाया असम्बन्धो नित्यमित्यनेन विरोधात्। इत्थञ्चोभकावित्यत्रायच्स्वार्थे नित्यं स्यादिति।

ननु एतस्यायचोऽत्यन्तस्वार्थिकत्वेन सुबुत्पत्तेः पूर्वमेवोत्पत्त्या उभावित्यत्र द्विवचनोत्पत्तेः पूर्वं द्विवचनपरत्वाभावस्य सत्त्वादयच् दुर्वार इति चेत्–न, यत्र द्विवचनपरत्वाभावसम्भावना तत्रायच्। अत्र च द्विवचनपरत्वस्यैव सम्भावनायास्सत्त्वेनायचोऽभावात्। न च तथापि स एव दोषो यत इदानीं द्विवचनपरत्वाभावेनायचि द्विवचनोत्पत्तावप्ययजन्तस्योभयशब्दस्य द्विवचनपरत्वं स्यादुभशब्दस्य तु द्विवचनपरत्वाभावसम्भावनैव स्यादिति वाच्यम्। यद्ययच् न स्यात्तदोभशब्दस्य द्विवचनपरत्वाभावस्स्यादिति सम्भावनाया एव निमित्तत्वेन प्रकृते तस्या अभावेनादोषात्। न चोभयत्रेत्यादौ यद्ययच् न स्यात्तदोभशब्दस्य सर्व्वनामत्वाभावेन त्रलाद्यभावेन लुकोभावादुभशब्दस्य द्विवचनपरत्वमेव स्यान्न तु द्विवचनपरत्वाभावसम्भावनेत्ययच् न स्यादित्युभयत उभयत्रेत्यादाविवेति दृष्टान्तासिद्धिरिति वाच्यम्। यद्युभशब्दादयच् स्यात्तदा अयजन्तस्योभयशब्दस्य द्विवचनपरत्वाभावः स्यादिति सम्भावनाया अपि निमित्तत्वेन प्रकृते तादृशसम्भावनायाः सत्त्वेनादोषात्। अत एव यत्र उभशब्दस्य उभयशब्दस्य वेत्युक्तं शेखरे न चोभावित्यादौ परादिवद्भावेन द्विवचनत्वेऽप्युभशब्दस्यैवाभावेनोभशब्दस्य द्विवचनपरत्वाभावसम्भावनास्त्येवेति चेत्–न, वृद्ध्यादेशात्पूर्वं द्विवचनपरत्वसम्भावनायास्सत्त्वेन द्विवचनपरत्वसम्भावनाभावस्यैव निमित्तत्वेन चादोषात्। न चोभयो मणिरित्यादौ अवयविन्ययचि निरवकाशत्वात् स्वार्थिकं बाधित्वा पूर्वं जाते पश्चात्स्वार्थिकमयच् स्यादिति वाच्यम्, योगविभागस्येष्टसिध्यर्थत्वेन लिट्यभ्यासस्योभयेषामिति निर्द्देशेन च क्वचित्तस्याप्रवृत्त्येष्टसिद्धेः। रूपप्रत्यये उभरूपमित्यादावपि काचित्कत्वादेवाप्रवृत्तिरत एव रूपप्रत्यये स्वार्थिकत्वेन द्वित्ववाचकत्वरूपद्विवचनत्वस्य सत्त्वेनोभशब्दस्य सर्वादिगणे पाठप्रत्याख्यानकल्पेऽयचोऽप्रवृत्त्याऽऽरम्भपक्षेऽयचः प्राप्त्या फलभेदो न। अस्मादेव भाष्यादुभशब्दाद्रूपवादेरनभिधानं वा। अथोभकावित्यादौ कप्रत्ययेऽयचो न प्राप्तिर्य्यद्ययच् न स्यात्तदोभशब्दात् कप्रत्यये द्विवचनपरत्वसम्भावना

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यादित्येतस्या अभावरूपनिमित्तस्य सत्त्वेऽपि यद्ययच् स्यात्तर्ह्ययजन्तस्य द्विवचनपरत्वं स्यादिति सम्भावनाभावरूपद्वितीयनिमित्तस्याभावात्। तथा हि यद्ययच् स्यात्तर्ह्ययजन्तस्योभयशब्दस्य सर्वादिगणे पाठेन कप्रत्ययं बाधित्वाऽकचि तन्मध्यपतितन्यायेनोभयकस्यायजन्तत्वेन तस्य च द्विवचनपरत्वसम्भानस्यैव सत्त्वं न तदभावस्येति शेखरे एतदेवोक्तम् अयच्यकच् तु न वाच्य इत्यनेनेति चेत्-न, अकचो निमित्तमयच् तस्य निमित्तभूतो यो यद्ययच् न स्यात्तदोभशब्दस्य द्विवचनपरत्वं स्यादिति सम्भावनाया अभावः तस्य प्रयोजकः प्रकृते कप्रत्यय एव। तस्याभावे हि द्विवचनपरत्वमेव सम्भाव्येतातोऽकजुपजीव्यः कप्रत्ययस्तस्याकजा बाधो न स्यादुपजीव्यविरोधस्यान्याय्यत्वात्। ततश्च यद्ययच् स्यात्तदा कप्रत्ययं बाधित्वाऽकच् स्यादितिसम्भावना न स्यात् किन्तु कप्रत्यय एव स्यात्। ततश्च द्विवचनपरत्वसम्भावनाभावः स्यादिति द्वितीयनिमित्तस्यापि सत्त्वेनायच् दुर्वारः। न चाकच अपवादत्वादुपजीव्यस्यापि कप्रत्ययस्य बाधक इति वाच्यम्, सर्वक इत्यादौ चारितार्थ्यात्। एतदेवोक्तं शेखरे 'उपजीव्यत्वेन कस्यैव प्राप्तेरपवादस्त्वन्यत्र चरितार्थ' इत्यनेन।

न च प्रथमसम्भावनाया अयचं प्रति निमित्तत्वे न मानमुभयत्रेत्याद्यर्थमावश्यकेन द्वितीयसम्भावनेनैवेष्टसिद्धेरिति न कप्रत्ययस्योपजीव्यत्वम्। प्रथमसम्भावनासंपादकत्वेनैव हि तस्योपजीव्यत्वादित्यपवादस्याकच एव प्रवृत्तेस्तस्य च तन्मध्यपतितन्यायेनोभयशब्दत्वात्तस्य च द्विवचनपरत्वसम्भावनाया एव सत्त्वेन नायजिति वाच्यम्। एवमपि कप्रत्ययात्पूर्वमयचोऽभावेऽपि कप्रत्यये जातेऽयचो दुर्वारत्वादिति दिक्।

स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टाः प्रकृतिग्रहणेन गृह्यन्त इत्ययमुभशब्दादुत्पन्नः कप्रत्ययः स्वार्थिकत्वादुभशब्दार्थ एवेति। सोपि द्वित्वविशिष्टवाचकः प्रकृतिभूतोभशब्दग्रहणेन ग्राहकेण द्विवचनशब्देन गृह्यते बोध्यते। द्विवचनपरत्वाभाव इत्यत्र च द्विवचनपदं द्वित्वविशिष्टबोधकपरमेव न तु द्विवचनसंज्ञकपरम्। अत एवोभयोरुभावुभोभावित्येव। ततश्चोभकावित्यादौ कप्रत्ययस्यापि द्विवचनत्वाद्द्विवचनपरत्वस्यैव सत्त्वेन नायजिति प्रत्याख्यात उभशब्दपाठो भाष्ये। परन्त्विदं भाष्यं प्रौढिवादमात्रमन्यथा त्रतसिलादेरपि स्वार्थिकत्वेन द्विवचनत्वादुभयत्रेत्यादावप्ययच् न स्यात्। न च द्वित्वविशिष्टाधिकरणत्वाद्यर्थकसप्तम्यन्ताद्युभशब्दस्य स्वार्थे तौ विहिताविति द्वित्वविशिष्टमात्रबोधकत्वरूपद्विवचनत्वाभाव इति वाच्यम्। उभकावित्यादौ कप्रत्ययस्यापि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुत्सावोधकत्वेन द्वित्वविशिष्टमात्रवोधकत्वाभावस्योभयत्र साम्यादिति **प्राचीनाः** ।

**नवीनास्तु** उभयत्रेत्यादावधिकरणत्वादेः प्राधान्येन द्वित्वनिष्ठप्रकारतानिरूपितसंख्येयनिष्ठमुख्यविशेष्यताकवोधजनकत्वं नास्त्यधिकरणत्वनिष्ठविशेष्यतानिरूपितप्रकारतासामानाधिकरण्येन तदसामानाधिकरण्यरूपमुख्यत्वस्य संख्येयनिष्ठविशेष्यतायामभावादुभकावित्यादौ च कुत्सायास्संख्येये विशेषणत्वात्संख्येयनिष्ठविशेष्यतायां मुख्यत्वावाधात् प्रत्याख्यानं सम्यगेवेत्याहुः ।

ननु **नवीनमते** अधिकरणत्वशक्तिमान् क्रियाकारकभावश्च सप्तम्यर्थः। आद्यस्याभेदेन प्रकृत्यर्थेऽन्वयस्तत्प्रतियोगिकसम्वन्धतया चान्त्यस्य भानम्। तथा च विशेष्यता न सप्त्यम्यर्थनिष्ठविशेष्यतानिरूपितप्रकारतासमानाधिकरणेति द्विवचनत्वमेव त्रलादेर्न्न च तिष्ठतीत्याद्यर्थनिष्ठविशेष्यतामादाय प्रकारतासामानाधिकरण्यं वाच्यम्, उभकावित्यादावप्यस्त्यादिक्रियामादाय संख्येयनिष्ठविशेष्यतायाम्मुख्यत्वाभावस्य तुल्यत्वात्। उभकावित्यादौ कप्रत्ययप्रकृतिभूतस्योभशब्दस्य द्वित्वसंख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठविशेष्यताविशिष्टत्वरूपं द्विवचनत्वमस्ति। वैशिष्टयञ्च स्वप्रयोजकत्वस्वसमानाधिकरणप्रकारतानिरूपितविशेष्यत्वाप्रयोजकत्वोभयसम्वन्धेन। प्रकृत्यर्थे विहितस्य कप्रत्ययस्यापि तादृशार्थकत्वेनोक्तद्विवचनत्वमस्तीति चेत् त्रल्प्रत्ययादेरपि तत्तुल्यम्। तत्र यथा तादृशप्रकारतानिरूपितविशेष्यताप्रयोजकत्वं क्रियापदस्य न तु कप्रत्ययस्य तथाऽत्रापि क्रियापदस्यैव तन्न तु त्रल्प्रत्ययस्येति **प्राचीनोक्त**मेव युक्तमिति चेत्-अत्रोच्यते—सप्तम्यर्थस्य क्रियाकारकभावस्य संसर्गतया भासमानस्य विशेष्यत्वाभावेऽपि प्रतियोगिनिरूपितं प्राधान्यमस्त्येव। तत्प्रयोजकत्वं सप्तम्यास्तदन्तार्थविहितस्य त्रलादेश्च। ततश्च द्वितीयसम्वन्धस्थाने स्वसमानाधिकरणाप्रधानतानिरूपितप्रधानत्वाप्रयोजकत्वस्य निवेशेन प्रकृते प्रयोजकत्वस्यैव सत्त्वेन न द्विवचनत्वमुभकावित्यादौ चोभप्रतियोगिकसम्वन्धार्थकत्वं न कप्रत्ययप्रकृतेरतएव न कप्रत्ययस्येति न तस्य स्वसमानाधिकरणाप्रधानानिरूपितप्रधानताप्रयोजकत्वमिति द्विवचनत्वं कप्रत्ययस्येति प्रत्याख्यानं युक्तमेवेति वोध्यम् ।

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## १६. परे तु विभक्त्यादेशेभ्यः परत्वात् पूर्वमेव जरसित्यसङ्गतमिति

अत्र दीक्षितेनेनादेशादेशात्प्रागेव परत्वाज्जरस्यदन्तत्वाभावादिनादेशाद्यप्राप्त्या निर्जरसा निर्जरसे इत्याद्युक्तम्। शेखरकृता च पूर्वविप्रतिषेधेन विभक्त्यादेशे प्रथमं जाते सन्निपातपरिभाषया कुत्र चिदजादिपरत्वाभावेन च जरसादेशाप्राप्त्या निर्जरेण निर्जरैः निर्जरायेत्याद्येव साध्वित्युक्तम्। अत्र प्रमाणं जराया इति सूत्रस्थं भाष्यम्। तत्र हि अजरांसीत्यत्र नपुंसकस्य झलित्यनेन नुम् जराया इत्यनेन जरस् अनयोः प्राप्तौ विप्रतिषेधेन जरसित्युक्तम्। तत्र यदि परत्वात् श्यादेशात् पूर्वमेव जरस्स्यात् तर्हि तस्मिन् काले सर्वनामस्थानपरत्वाभावेन नुमोऽप्राप्तौ तयोर्य्युगपत्प्राप्त्यभावेन परस्परलब्धावकाशयोर्य्युगपत्प्राप्तौ परमित्यर्थकविप्रतिषेधे परमित्यस्याप्राप्त्या विप्रतिषेधेन जरसित्यसङ्गतं स्यादतः पूर्वविप्रतिषेधेन जरसादेशात् पूर्वं श्यादेशे शिसर्वनामस्थानमिति सर्वनामस्थानत्वेऽन्तरङ्गत्वाज्जाते नुम्जरसोर्य्युगपत्प्राप्तौ विप्रतिषेधे परमित्यनेन जरसित्युपपन्नं भवति। अथ नेदं भाष्यं विरुद्धं प्राचाम्। तथा हि नेदं भाष्यं नुमः पूर्वं जरसित्येतत्तात्पर्य्यकमपि तु श्यादेशात्पूर्वावस्थायामेव जरसादेशशीभावयोः प्राप्तौ परत्वाज्जरस् भवति। नित्यत्वाच्छीभावः कथन्नेत्याशङ्किते जरसादेशस्यापि नित्यत्वादुभयोस्साम्येन परत्वाज्जरसिति समाहिते कथं जरसो नित्यत्वं शीभावे कृते नुमः प्रवृत्त्या निर्दिश्यमानस्य नुमा व्यवधानाज्जरसादेशस्याप्राप्त्या कृताकृतप्रसङ्गित्वरूपं नित्यत्वं न जरस इति नित्यत्वाच्छीभाव एव युक्त इति शंकाया इदमुत्तरं—न नुमः शीभावे कृते प्रवृत्तिस्तत्र हि नुम्जरसोः प्राप्तौ विप्रतिषेधेन जरस् एवेति जरसादेशस्यापि नित्यत्वात्परत्वाज्जरसिति युक्तमेवेत्येवं विचारपरमिति चेत् टाङसीति सूत्रस्थं कैयटोक्तं प्रमाणम्। तत्र हि भाष्यकारः सन्निपातपरिभाषया जरसादेशमनभ्युपयन् अतिजरेण अतिजरादिति भाव्यं न त्वतिजरसिनातिजरसादिति गौरवमुद्भावितवानित्युक्तम्। जरसादेशस्यैव परत्वादिष्टत्वे पूर्वं जरसादेशे इनाद्यप्राप्त्या वैकल्पिकत्वात्तदभावपक्षे जरसादेशाप्राप्त्या सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नित्युक्तेरसङ्गत्यापत्तिः। अथेदमपि न प्रमाणं, तथा हि—वैकल्पिकत्वाद्विभक्त्यादेशात्पूर्वमतिजर आ इति स्थिते जरसोऽभावे इनादेशे अतिजर इनेति स्थिते अतिजर आ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति लक्ष्याद्रूपान्तरं प्रापिते निर्जरसाविति लक्ष्यान्तर इवात्रापि जरसादेशप्राप्तेरव्याहतत्वेन सन्निपातपरिभाषया तदभावकथनं नासमञ्जसमिति।

ननु शिश्वियतुरित्यादौ विभाषाश्वेरित्यस्य वैकल्पिकत्वादभावे द्वित्वं तदनन्तरं तस्मिन्नेव रूपान्तरं प्रापिते लक्ष्ये विभाषाश्वेरिति संप्रसारणापत्तिरिति चेत्-न। तत्र श्विवुद्धेर्लिड्वुद्धेश्चाश्रयणेन प्राप्तस्य संप्रसारणस्याभावोपक्रमात्तादृशस्यैव तत्रैव भावानौचित्यादत्रारूपाचमाश्रित्य प्राप्तस्याभावोपक्रमे ईरूपाचमाश्रित्य प्राप्तस्य भावे बाधकाभावात् वृत्तिकारेणोक्तमतिजरसिनातिजरसादिति केचिदिच्छन्ति। यथा तु भाष्यं तथा नैतदिष्यत इति। लक्ष्यत इति एतदपि पूर्वमिनाद्यादेशप्रवृत्तावेव सङ्गच्छते। परत्वाज्जरसि तु इनादेशादेरप्रवृत्त्याऽतिजरसिनातिजरसादिति रूपासिद्ध्याऽसङ्गतं स्यात्।

वस्तुतस्तु यथा तु भाष्यमित्यादिना स्वयमेव सन्निपातपरिभाषाविरोधेन जरसादेशाप्रवृत्त्येव जरसादेशस्य परत्वात् पूर्वमिनादेशादेरप्रवृत्त्याप्यतिजरसिनेत्यादेरयुक्तत्वबोधनान्न विभक्त्यादेशस्य पूर्वं प्रवृत्तौ प्रमाणं वृत्तिग्रन्थोऽपि तदयुक्तत्वस्यापि वक्तुं शक्यत्वाच्च, अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस् ततः सन्निपातपरिभाषया न लुगजरसमिति दीक्षितोक्तमप्ययुक्तं, पूर्वविप्रतिषेधाज्जरसादेशं प्रबाध्यापवादत्वाच्च। लुकं प्रबाध्यामादेशे सन्निपातपरिभाषया जरसादेशाप्राप्तेरजरमित्येवेति शेखरोक्तमपि निर्मूलं, पूर्वविप्रतिषेधे प्रमाणाभावस्योपपादितत्वात्। अथ जराया इति सूत्रस्थं भाष्यमेवोक्तार्थे प्रमाणम्। तथा हि—तत्र पूर्वपक्षिणा अतिजरसं पश्येत्यत्र लुक् कस्मान्नेति पृष्टे परेण प्रथमैकवचनेऽप्यतिजरसं तिष्ठतीत्यत्रापि कुतो न लुक् शङ्क्यते इति पृष्टे पूर्वपक्षिणा प्रथमैकवचनेऽम्भावोत्तरमेव जरस् पूर्वमच्परत्वाभावात् तत्र जरसि कृते सन्निपातपरिभाषया न लुगिति द्वितीयैकवचनात् प्रथमैकवचने विशेष उक्तः। यद्वा अम्भावे कृते सन्निपातपरिभाषया न जरसिति पाठभेदेन विशेष उक्तः। अत्रान्त्यपाठ एव युक्तः, न तु पूर्वपाठः। प्रथमैकवचने लुकोऽभावप्रयोजकस्य सन्निपातपरिभाषारूपस्य ज्ञानसत्त्वेन प्रष्टव्यं प्रति तस्य बोधितत्वेन च द्वितीयैकवचने शंकोत्पत्त्यसम्भवात्। तयैवात्रापि तद्वारणस्य स्पष्टत्वात्। अन्त्यपाठे च जरसोऽभावस्य सन्निपातपरिभाषया प्रथमैकवचने उक्तत्वेऽपि कार्य्यान्तरेऽपि सा प्रवर्तते एवेति नियमाभावादनित्यत्वेनाप्रवृत्तेरपि सम्भवात्। द्वितीयैकवचने लुक् कस्मान्नेति शंकोत्पत्तिसम्भवात्। ततः परेण यद्येवमतिजरसमतिजरसैरित्यत्र न प्राप्नोति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जरसिति द्वितीयैकवचनादौ शंकिते सिद्धान्तिना इष्टमेवैतत् संगृहीतमतिजरमतिजरैरिति भवितव्यमिति। एवमिति सन्निपातपरिभाषया जरस् न भवति चेदित्यर्थः। सिद्धान्तिना जरसोऽभावस्येष्टापत्तिकरणेनैव लुक् कस्मान्नेति शंका समाहिता ज्ञानमित्यत्रेवात्रापि अमा लुको बाध इति अत्रामोऽमादेशस्य जातत्वे एवादन्तत्वमाश्रित्य जातस्यामादेशस्यादन्तत्वविघातकजरसादेशं प्रत्यनिमित्तत्वं सन्निपातपरिभाषया बोधयितुं शक्यते नान्यथेति स्पष्टमेवानेन भाष्येण जरसादेशात्पूर्वं पूर्वविप्रतिषेधेन विभक्त्यादेश इति लभ्यते। अथात्रापि इदं विचार्य्यताम्—प्रथमैकवचने जरसोऽभावायापि सन्निपातपरिभाषाया अनुसन्धाने द्वितीयैकवचने तयैव लुकोऽपि वारणस्य बालैरपि सुज्ञेयत्वेन लुक्शङ्काया निर्बलत्वमेव। तस्मात् पूर्वपाठ एव विशेषोपपादने युक्तः। अन्त्यपाठस्येदानीन्तनभाष्यपुस्तकेऽदर्शनाच्च।

कथं पूर्वपाठो युक्त इति चेदुच्यते—अम्भावोत्तरमेव जरसित्येतत्पर्य्यन्तमेव विशेषोपपादकम्। अमि कृते तस्य लुकं प्रत्यपवादत्वाज्ज्ञानमित्यत्रेव लुकोऽप्राप्तिरिति तद्भाव इति प्रथमैकवचने शङ्का न कृता। तत्र कृते इत्यादिना च द्वितीयैकवचने समाधानमुच्यते—द्वितीयैकवचनममं निमित्तीकृत्यामादेशात्परत्वाज्जातस्य जरसादेशस्याम्विनाशकलुकं प्रत्यनिमित्तत्वान्न लुगिति तदर्थः। ततः पूर्वपक्षिणा यदि सन्निपातपरिभाषास्ति तर्हि प्रथमैकवचने जरसपि न प्राप्नोति, अकारं निमित्तीकृत्य जातस्यामादेशस्याकारविघातकजरसादेशं प्रत्यनिमित्तत्वादिति यद्येवमित्यादिनोक्ते सिद्धान्तिना इष्टमेवैतत्संगृहीतमित्यादिना प्रथमैकवचने जरसादेशाभावस्येष्टापत्तिः कृता। एतद्भाष्यस्य द्वितीयैकवचनपरत्वकथनं शेखरकृतान्त्वयुक्तमेव प्रमाणाभावात्। एवञ्च नैतद्भाष्याद्विभक्त्यादेशस्य पूर्वविप्रतिषेधेन जरसादेशापेक्षया प्रावल्यं लभ्यत इति प्राचीनोक्तं द्वितीयैकवचनेऽतिजरसमित्येव युक्तन्न तु शेखरोक्तमतिजरमिति विवेचनीयम्।

---

## १७. रषाभ्यां नोणस्समानपदे ८।४।१

एकपदे यत्र निमित्तनिमित्तिनौ स्तस्तत्र रेफषकाराभ्यां परस्य नस्य णत्वमित्यर्थः। निमित्तस्य निमित्तिनश्च पदाघटकस्याभावेन पदे इत्यनेनैव सामर्थ्यान्निमित्तनिमित्तिनोरेकपदघटकत्व इत्यर्थस्य लाभेनैकार्थबोधकं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मानग्रहणं व्यर्थं सत् समानमेव यत्पदमित्यर्थबोधनद्वाराऽखण्डपदबोध-कम्। तेन रामनामेत्यादौ समासरूपसमानपदघटकत्वेऽपि तयोर्न्न णत्वम-खण्डपदत्वाभावात्।

नन्वखण्डपदत्वं पदाघटितपदत्वम्। तच्च रामनामेति समुदाये न। पदत्वसत्त्वेऽपि पदाघटितत्वाभावादिति चेत्-न। मातृभोगीण इत्यादौ मातृपदघटितत्वेन पदाघटितत्वाभावेन णत्वानापत्तेः। न च निमित्तिम-त्पदाघटितत्वन्तत्त्वं मातृपदस्य निमित्तिमत्त्वाभावेन भोगीनित्यस्य केव-लप्रत्ययस्य वा पदत्वाभावेन च मातृभोगीनेति समुदाये विशिष्टाभाव-सत्त्वेन णत्वोपपत्तेरिति वाच्यम्। सुष्ठु पर्व यस्य तेन सुपर्वणेत्यादौ निमित्तिमत्पदं पर्वन्निति तद्घटितत्वेन णत्वानापत्तेरिति चेन्न। निमित्ता-नधिकरणनिमित्तिमत्पदाघटितत्वस्य सुवचत्वात्। पर्वन्नित्यस्य निमित्ता-नधिकरणत्वाभावेनादोषात्। न च गन्धर्वस्य गानङ्गन्धर्वगानमित्यादौ गतिकारकोपपदानामित्यनेन सुबुत्पत्तेः प्रागेव समासे गानेत्यस्य पदत्वा-भावेन समुदाये विशिष्टाभावसत्त्वेन णत्वापत्तिरिति वाच्यम्, पदशब्देन पदत्वयोग्यस्यार्थवत एव ग्रहणेनार्थवत्वस्य तत्र सत्त्वेनाभावान्तलक्षणस्य तत्समुदायेऽभावेन णत्वापत्तेरयोगात्।

ननु ऋवर्णात्परस्यापि नस्य णत्वमित्यर्थज्ञापकत्वं णत्वाभावाय क्षुभ्णादिषु पठितस्य नृनमनशब्दस्य, अन्यथा रेफषकारात्परत्वस्याभावेन णत्वाभावोपपत्तौ पाठस्य वैयर्थ्यापत्तेरित्यस्य भाष्योक्तस्यासङ्गत्यापत्ति-र्न्निमित्तानधिकरणं निमित्तिमत् पदं नमनेति तद्घटितत्वेन समानपद-त्वाभावेन ज्ञापितेऽपि स्वांशे चरितार्थ्याभावादिति चेत्-न। नृनमन्निति-समुदायस्य संज्ञाभूतस्य पदघटितत्वाभावेनाखण्डपदत्वात्। अथ सर्वन-रेणेति तृतीयान्तपदेऽस्ति सर्व्वेति नरेति च पदन्तन्न किमपि निमित्तान-धिकरणं निमित्तिमदितिनिमित्तानधिकरणनिमित्तिमत्पदाघटितत्वेन विभक्तिनकारस्येव नरनकारस्यापि णत्वापत्तिरिति चेत्—अत्रोच्यते-रेफषकारान्यतरविशिष्टस्य नस्य णत्वमित्यर्थः। वैशिष्ट्यञ्च—स्वोत्तरत्व-स्वाघटितपदाघटकत्वोभयसम्बन्धेन। नरघटकनकारे रेफवैशिष्ट्यन्नास्ति। स्वोत्तरत्वसत्त्वेऽपि द्वितीयसम्बन्धाभावादिति न णत्वम्। विभक्तिनकारे नरघटकरेफवैशिष्ट्यमस्ति यतः स्वोत्तरत्वमप्यस्ति स्वाघटितपदाघटकत्व-ञ्चास्तीति भवति तस्य णत्वम्। नारायणशब्दे संज्ञाशब्दत्वेन समान-पदत्वमुपपाद्यम्।

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# १८. कोशे शब्दा अर्थपरा एव

ननु पद्दन्नोमासिति सूत्रे प्रभृतिग्रहणस्य प्रकारार्थत्वे प्रमाणं 'पदङ्घ्रिश्चरणोऽस्त्रियां,' 'स्वान्तं हृन्मानसं मन' इत्यमरकोशे, सौ परे पच्छब्दस्य हृच्छब्दस्य च प्रयोगः। आद्यर्थत्वे हि शसादावेव पदादिशब्दस्य साधुत्वबोधनेन सौ तयोरसाधुत्वापत्तेः। प्रकारार्थत्वे च प्रकारस्सादृश्यमिति शस्सदृशे परे इत्यर्थेन सुप्त्वेन शस्सादृश्यस्य स्वादावपि सत्त्वेन तस्मिन्नपि परे साधुत्वोपपत्तिरिति दीक्षितस्य नागेशस्य चाशयस्तदनुपपन्नम्। पदधातोः हृधातोश्च क्विपि पत् पदौ पदः, हृत् हृदौ हृद इति रूपाणां साधुत्वस्य सर्वसम्मतस्योपपत्तये चरणवाचकस्य पच्छब्दस्य हृदयवाचकस्य हृच्छब्दस्यैव शसादावेव साधुत्वमित्यस्य वक्तव्यतया कोशस्थपदानामनुकरणत्वेन शब्दपरतया पादाद्यवाचकत्वेन सूत्राविषयतया स्वादावपि साधुत्वानुपपत्तेरभावेन ज्ञापकत्वासम्भवात् प्रकृतिवदनुकरणमित्यनेनानुकार्य्यगतचरणवाचकत्वादेरतिदेशात्सूत्रविषयतेति चेत्तस्यातिदेशस्य वैकल्पिकत्वेनाप्युपपत्तेर्ज्ञापकत्वासम्भवादिति चेत्-न। कोशे शब्दानामर्थपरत्वात्।

ननु तर्हि 'विष्णुर्नारायणः कृष्ण' इत्यादिवाक्याद्बोधानापत्तिरस्यैव शक्तिग्राहकत्वेनैतद्वाक्यार्थबोधात्प्राक् शक्तिग्रहाभावेन सहकारिकारणविरहात् वाक्यार्थबोधोत्तरं शक्तिग्रहः, शक्तिग्रहानन्तरञ्च वाक्यार्थबोध इत्यन्योन्याश्रयादिति चेत्—न, विष्णुपदमर्थबोधकं पदत्वात् घटपदवदित्यनुमानेन सामान्यतश्शक्तिग्रहसम्भवात्। न च सामान्यतश्शक्तिग्रहेऽपि विष्णुपदार्थाभिन्नो नारायणपदार्थ इत्यादिक्रमेण बोधोऽनुपपन्न एवाशक्यस्य विष्णुपदत्वादेश्शाब्दबोधे भानासम्भवात्। अनुमितिस्त्वर्थत्वावच्छिन्नस्यैव। तस्यैव पदत्वव्यापकत्वाद्विष्णुपदार्थत्वावच्छिन्नस्यातथात्वेनानुमित्यविषयत्वात्। यत्र यत्र स्वरूपसम्बन्धेन पदत्वन्तत्र तत्र शक्तिसम्बन्धेनार्थ इत्याकारकव्याप्तेरेव सत्त्वादिति वाच्यं, सामान्यवह्निधूमयोरेव व्याप्यव्यापकभावेऽपि योग्यताबलात्पर्व्वतो वह्निमानित्यादौ पर्वतीयवह्नेरेव भानवदर्थपदत्वयोरेव व्याप्यव्यापकभावेऽपि विष्णुपदमर्थवत् पदत्वादित्यनुमानेऽपीतरबाधादिना विष्णुपदार्थस्यैव भानात्।

ननु विष्णुपदार्थत्वादेरनुमितौ शक्यविशेषणतया भानेऽपि शक्योपलक्षणतया तत्पदजन्यबोधे बुद्धिस्थत्वस्यैव शाब्दबोधे भानानुपपत्तिरेवेति चेत्-न, शक्यतावच्छेदकज्ञानात्प्रागुपलक्षणीभूतस्यापि भानोपगमादत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवागृहीतशक्तिकं प्रति घटमानयेत्युक्तौ कोऽस्ति घटपदार्थो य आनेतव्य इति प्रश्नो भवति। मम तु शक्यतावच्छेदकाज्ञानेऽपि घटपदार्थत्वादिना बोधाद्विशेषरूपावच्छिन्ने प्रश्न उपपद्यते।

नन्वेवमपि विष्णुपदार्थाभिन्नो नारायणपदार्थ एवं क्रमणैव कोशजन्य-बोधे विष्णुत्वादिविशेषरूपावच्छिन्ननिरूपितशक्त्यग्रह एवेति चेत्-न। पठितानां पर्य्यायशब्दानामेकं पदं व्यवहारादिना यदि विशेषरूपेण गृहीत-शक्तिकं तदैव कोशाद्बोधो नान्यथा। तत्पदादुपस्थितविशेषधर्म्मावच्छि-न्नस्य विष्णुपदार्थत्वादिनोपस्थितविष्णुपदार्थान्वितनारायणपदार्थत्वाद्य-वच्छिन्नेऽभेदेनान्वयबोधे वाक्याज्जाते पश्चादनुमानेन सर्वेषां पदानां विशेषधर्म्मावच्छिन्ने शक्तिग्रहसम्भवात्। अनुमानञ्च नारायणपदं विष्णु-त्वावच्छिन्नवाचकं, विष्णुत्वावच्छिन्नाभिन्नबोधकत्वे सति विशेषधर्म्मा-वच्छिन्नाबोधकत्वात्। यत्पदं विशेषधर्म्मावच्छिन्नबोधकं सत् यद्धर्म्मा-वच्छिन्नाभिन्नबोधकं तत् तद्धर्म्मावच्छिन्नशक्तिमत्, घटपदार्थत्वेन बोधक-घटपदवत्। कोशस्थवाक्यजन्यबोधानन्तरं मानस एव विशेषधर्म्माव-च्छिन्नबोधकत्वग्रह इति वा बोध्यम्। यस्य च सर्वं पदं विशेषरूपेण गृहीतशक्तिकन्तस्यैकरूपेणैव सर्वेभ्यः पदेभ्य उपस्थित्या घटो घट इति वाक्यवत्, कोशस्थवाक्यं न शाब्दबोधजनकम्। न च कस्य चिद्विष्णुपदं कस्य चिन्नारायणपदं विशेषधर्म्मावच्छिन्ने गृहीतशक्तिकं कस्यचिदन्य-देवेति पुरुषभेदेन सर्वाण्येव पदानि विशेषधर्म्मावच्छिन्नबोधकानि सामा-न्यधर्म्मावच्छिन्नबोधकानि चेति वक्तव्यन्तदनुपपन्नं सकृदुच्चरितन्याया-दिति वाच्यम्। एकस्मात्पदादेकस्य पुरुषस्यैकदैव बोध इत्यर्थ एव तन्न्या-यस्य तात्पर्य्यात् पुरुषभेदेनोभयबोधकत्वेऽपि क्षतिविरहात् अघन्ये देवि सर-स्वति ईडे इत्यादि मन्त्रस्योपन्यासस्त्वस्मिन् प्रकरणे विफल एव। तस्य कोशत्वाभावेनार्थपरत्वस्य सर्वसम्मतत्वात्। न च कोशस्थशब्दानामर्थ-परत्वे 'एकदन्त-हेडम्ब-लम्बोदर-गजानना' इत्यादौ विरूपाणामपि समा-नार्थानामित्यनेनैकशेषापत्तिरिति वाच्यम्, एकदन्तादिपदानामेकदन्तप-दार्थत्वादिविभिन्नधर्म्मावच्छिन्नबोधकत्वेनैकधर्म्मावच्छिन्नबोधकत्वरूप-समानार्थत्वविरहात् एकधर्म्मिबोधकत्वमात्रेण तु समानार्थकत्वे गुणवद्-द्रव्यपदयोरप्येकशेषप्रसङ्गात्। शब्दस्वरूपबोधनपूर्वकार्थबोधने कोशस्य तात्पर्य्याच्च। अत एव यत्तदेतेभ्य इत्यत्र त्यदादीनि सर्वैर्नित्यमित्ये-कशेषो न। तत्रापि स्वरूपबोधने तात्पर्य्यात्। वस्तुतस्तु शब्दस्वरूप-परतया त्यदादित्वस्यैवाभावात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परे तु कोशे शब्दानां शब्दस्वरूपपरत्वमेव 'विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरः श्रवा' इत्यादावेकार्थका इत्यस्याध्याहारेणैते शब्दा एकार्थका इति सामान्यतो वाक्यार्थबोधोत्तरं यत्किञ्चित्पदे विशेषरूपावच्छिन्ने शक्तिग्रहवतः पुरुषस्य मानसस्सर्वपदशक्तिग्रहः शब्दपरत्वेन समानार्थकत्वाभावादेकदन्तेत्यादावेकशेषश्च न।

ननु तर्हि चरणवाचकपदादिशब्दानां शसादावेव साधुत्वमिति बोधनेऽपि स्वरूपवाचकपदादीनामेतत्सूत्राविषयतया स्वादावपि साधुत्वस्य सिद्धतया ज्ञापकत्वानुपपत्तिरिति चेत्—न। यत्किञ्चिद्विभक्तिवचनलिङ्गनियतसाधुत्वकानां शब्दानां तत्तल्लिङ्गवचनविभक्तीनामुपन्यासपुरस्सरं तत्तच्छब्दानामुपादानस्य कोशकृच्छैलीविषयत्वम्। 'लाजाः पुंसि च भूम्न्यैव' 'दाराः पुंसीत्यादौ' यथा तथैवेदानीं पदादिशब्दानां शसादावेव साधुत्वे पद्धृच्छस्प्रभृतिषु इत्येव वक्तव्ये 'पदङ्घ्रिश्चरणोऽस्त्रिया'मित्युक्तेर्ज्ञापकत्वोपपत्तेरित्यलम्।

---

## १९. धातोः किं हाहानिति

गन्धर्ववाचकोऽव्युत्पन्नो हाहाशब्दः सूत्रे धातुग्रहणाभावे आदन्तत्वेनास्य शब्दस्य य आकारस्तस्यापि लोपस्स्यात् तत्सत्त्वे तु धातुत्वाभावान्न दोष इति भावः। यदि तु हा इति शोकव्यञ्जकं शब्दं जहाति त्यजतीत्यर्थकोहाक्धातुप्रकृतिकक्विन्तोहाशब्दस्तदा लोप इष्ट एव। धातोरित्यस्य फलन्तु आकारेण सहितः सास्ततश्शसि सानित्यादौ बोध्यम्। वस्तुतस्तु अत्रापि लोप इष्ट एव। तथा हि क्त्वः श्नः इत्यादौ लोपसिद्धये आतो नाप इति वार्त्तिककृतोक्तम्। आवन्तभिन्नस्य लोप इति तदर्थः। भाष्यकृता च आत इति योगविभागेन क्त्वः श्नः इत्यत्र लोपं संसाध्यातो नाप इति वार्त्तिकं प्रत्याख्यातमेवञ्च साशब्दे लोपस्य वार्त्तिकमते इष्टस्य प्रत्याख्यानेऽपि आत इति योगेनेष्टत्वमेवान्यथाऽऽरम्भप्रत्याख्यानयोः फलभेदापत्तेः। एवञ्च वार्त्तिकतत्प्रत्याख्यानपरभाष्याभ्यां फलैक्याय धातुग्रहणमावन्तभिन्नपरमेव। तथा च सूत्रवार्त्तिकभाष्यकाराणां मतेषु फलैक्यं संपन्नम्। सूत्रे धातोरित्यस्य धातुमात्रपरत्वे तन्मते सानित्यत्र लोपो नेष्यते इत्येव वक्तव्यम्। तज्ज्ञानञ्च वार्त्तिककृतो भाष्यकृतश्च नास्ति। अत एव वार्त्तिककृता आतो नाप इत्युक्तमात इतियोगविभागेन भाष्यकृता च तत्प्र-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्याख्यातमन्यथा तत्रैव फलभेदात्। तथाकरणे तयोः प्रवृत्तिर्न्न स्यात्। तथा च महर्ष्योस्तयोरज्ञानित्वकल्पनमनुचितं स्यात्। न च वार्त्तिके अनाप्पदमावन्तभिन्नधातुपरमित्येवोच्यताम्। सूत्रे धातुपदञ्च स्वार्थपरमेवास्तु। सानित्यत्र लोपः सर्वेषाम्मते इष्ट एवास्त्वित्येव कुतो न फलभेदस्यास्मिन्नप्यर्थे अभावात् न च सानित्यत्र फलभेदाभावेऽपि त्त्कः श्न इत्यत्र धातुत्वाभावेन लोपो न स्यात्। आत इति योगविभागेन भाष्यमते लोपे तु सूत्रवार्तिकमते अप्राप्त्या फलभेदो दुर्वारस्स्यादिति वाच्यम्। तत्रापि स्वस्मिन्नपि स्वसदृशाचरणकर्तृत्वसम्भवेनाचारक्विबन्तात्कर्तृक्विपस्सत्त्वेन सर्वेषां मते लोपस्य प्राप्तेरव्याहतत्वात्। न चावन्तमालाशव्दप्रकृतिकाचारक्विबन्तात् कर्तृक्विबन्तमालाशव्दे सूत्रभाष्यमते प्राप्तेर्व्वार्तिकमते चाप्राप्तेः फलभेदो दुर्वार इति वाच्यम्, तादृशक्विपोऽनभिधानस्य कल्पनादिति वाच्यम्, प्रथमयोरिति सूत्रस्थभाष्यविरोधात्। तत्र हि अतो गुणे इति पररूपमकस्सवर्णे प्रथमयोः पूर्वसवर्ण इति दीर्घमात्रस्य वाध्यसामान्यचिन्तया बाधकमिति पक्षे रामानित्यादिसिद्धये वहुवचने झल्येदितिसूत्रे बहुवचने इति योगं विभज्य तत्र अतो दीर्घ इति सुपि चेत्यतस्सुपीति चानुवर्त्त्य बहुवचने सुपि अदन्ताङ्गस्य दीर्घं विधायाग्नीनामित्यादौ सावकाशं नुटं रामाणामित्यादौ परत्वाद्बाधित्वा दीर्घे कृते नुटोऽप्राप्तिमाशङ्क्य नुड्विधायके आज्जसेरसुगित्यत आद्ग्रहणमनुवर्त्त्यादन्तादपि नुटो विधानेन समाधाय कीलालपामित्यादावालोपं परत्वाद्बाधित्वाऽऽदन्तत्वप्रयुक्तो नुट्स्यादित्याशंक्यातो धातोरिति नुट्विधायकेऽनुवर्त्त्य वाक्यभेदेन नुटो बाधकमतो लोपं विधाय समाहितम्। भवदुक्तरीत्या धात्ववयवाकारस्य लोपाभावे तु पूर्वोक्तसाशव्दादामि लोपाभावेनादन्तान्नुटि सानां सिद्धान्तभूते यथास्थितपक्षे ह्रस्वनद्यापः परत्वाभावेन नुटोऽप्राप्त्या दीर्घे सामितिफलभेदेन तद्भाष्यविरोधः स्पष्ट एव। तस्मात्सूत्रे धातुपदमावन्तभिन्नपरमेव। सानित्यत्र लोप इष्यत एव। न तु वार्तिके अनाप्पदमावन्तभिन्नधातुपरं सानित्यादौ लोपो नेष्यते इति युक्तम्।

ननु सूत्रस्थधातुपदस्यावन्तभिन्नपरत्वे ङ्याप्प्रातिपदिकादिति सूत्रस्य भाष्यविरोधस्तत्र हि रमेत्यादौ पूर्वान्तवद्भावेन प्रातिपदिकत्वादेव सिद्धे आब्ग्रहणस्य दामेत्यादौ डापि फलन्दत्तम्। तत्र टिलोपेनैकादेशाभावादिति तद्भावः टायां क्त्वायामिति भाष्यप्रयोगे टापो दर्शनेन तत्प्रकृतिभूतष्टात्वाशब्दः प्रत्ययानुकरणरूप आबन्तभिन्न इत्यवश्यं वक्तव्यः। तस्य च टापि भसंज्ञाप्यस्ति तद्धिताधिकारे पाठेन स्वादिकप्रत्ययावध्यन्तर्गत-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वात् टाप्, इत्यावन्तभिन्नाकारान्तत्वेनातो धातोरित्याकारलोपस्यावश्यं भावात् पूर्वान्तत्वेन प्रातिपदिकत्वस्य वक्तुमशक्यतया स्वाद्युत्पत्त्यर्थं टाप्यप्याब्ग्रहणस्य सार्थक्यसम्भवेन ङ्याप्पर्य्यन्तानुधावनस्य महर्षेर्वैयर्थ्यापत्तेरिति चेत्-सत्यम्। वार्त्तिकेन फलैक्यायातो धातोरित्यस्य स्त्रीवोधकपदाघटकाकार एव तात्पर्य्यम्। तथा च प्रकृतिभूतक्त्वाशब्दस्यावन्तभिन्नत्वेऽपि टाबुत्पत्त्यर्थं स्त्रीवोधकत्वस्यावश्यकतया तदाकारस्य लोपाप्राप्तेः।

नन्वेवमेनसहिता स्त्री सा इत्यत्रादन्तत्वाभावेन टापोऽभावेऽपि स्त्रीवोधकत्वेनातो धातोरित्यस्याप्राप्त्याऽऽदन्तात्परत्वेनामो नुटि सानामिति यथास्थितन्यासे ह्रस्वनद्यापः परत्वाभावेन नुटोऽप्राप्त्या सामिति फलभेदात्प्रथमयोरितिसूत्रस्थभाष्यविरोध एवेति चेत्-न। रमाणामित्यादावावन्तस्थलेऽप्यादन्तत्वादेव नुटस्सिद्धावाब्ग्रहणस्य स्त्रीवोधकादादन्ताच्चेदावन्तादेवेति नियमार्थत्वेनास्मिन्नपि पक्षे नुटोऽप्राप्त्या फलभेदाभावात् आब्ग्रहणन्न कर्त्तव्यमिति शेखरस्तु चिन्त्य एव।

नन्वेतत्साशब्दे सूत्रमते लोपाप्राप्त्या वार्त्तिकमते च प्राप्त्या फलभेद एवेति चेत्-न। अनाप इत्यस्यापि स्त्रीवोधकभिन्नस्येत्यर्थेन सूत्रवार्त्तिकयोरेकार्थकत्वात्।

ननु राम आमिति स्थिते नुटः परत्वाद्दीर्घे आवन्तरमाणामित्यादौ लोपाप्राप्तिविषये चरितार्थमादन्तत्वनिमित्तकं नुटं प्रवाध्य कीलालपामित्यत्रेवातो धातोरिति लोपेन रामामिति स्यादिति चेत्-न। श्रीपायेत्यत्रेवात्वमुपजीव्य जायमानैकादेशरूपाकारस्यात्वविघातकमातो धातोरित्येतत्प्रत्ययनिमित्तत्वेन लोपाप्राप्तेः।

नन्वष्टानामित्यत्र षट्चतुर्भ्यं इति नुट्यष्टन् आ विभक्तावित्यात्वे अष्टानामिति स्थिते यदागमन्यायेन नाम आम्त्वादादन्तात्परत्वाद्ध्रस्वनद्याप इति नुटि न द्वयश्रवणापत्तिरिति चेत्-न। ह्रस्वनदीसाहचर्य्येणाकृतनुट्कस्यैवाम आदन्तादित्यनेन नुड्विधानात्।

ननु तेषामित्यादौ त्यदाद्यत्वे अग्नीनामित्यादौ सावकाशं नुटमाबन्तादामि सावकाशं सुटञ्च परत्वाद्वाधित्वा बहुवचन इत्यनेन दीर्घे ता आमिति स्थिते सुटि अदन्तत्वाभावादेत्वाप्राप्त्या तासामिति स्यान्न तेषामिति चेत्-न। वाध्यसामान्यावन्तापेक्षया नुट इव दीर्घस्यापि सुटा तक्रन्यायेन बाधात् यदि दीर्घो न स्यात्तदा सुटि कृते एत्वं स्यादिति सम्भावनया पूर्वं दीर्घाप्राप्तेरुपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधत इति न्यायादिति दिक्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## २०. समुदायस्य सखिरूपत्वाभावादसखीत्यादि

दीक्षितमतेऽसखीत्यस्य सखिशब्देन नञस्सम्बन्धात् सखिभिन्न-शब्दावयवाविवर्णोवर्णौ घिसंज्ञाविति वर्णसंज्ञापक्षेऽर्थः। कृतं सख्येति वाक्ये कृतं सखीतिसमुदायस्य सखिभिन्नत्वेन तदवयवेकारस्य घिसंज्ञा तु न पर्य्युदासन्यायेन प्रातिपदिकत्वेन सखिसदृशस्यैव सखिभिन्नस्य ग्रहणेन कृतं सखीत्यस्यासखिशब्देनाग्रहणात्। वर्णसंज्ञापक्षे आकडारीयत्वाल्लघु-घिसंज्ञयोस्समावेशानापत्त्या सिद्धान्तभूते तदन्तसंज्ञापक्षे तु सखिभिन्ना-विवर्णोवर्णान्तौ घिसंज्ञावित्यर्थः। पक्षद्वयेऽपि सुसखिनेत्यादौ घित्वं युक्तमेव। समुदायस्य सुसखीत्यस्य सखिशब्दभिन्नत्वात्।

ननु घटपटौ न घट इति प्रतीतेरभावात् स्वघटितसमुदायत्वावच्छेदेन स्ववृत्तिधर्म्मावच्छिन्नप्रतियोगिताकभेदस्याभावेन सखिघटितसमुदाये सुसखिशब्दे सखिशब्दभिन्नत्वाभावात् सुसखिशब्दस्य घित्वमयुक्तमिति चेदत्रोच्यते—स्वाङ्गसमुदायो न स्वाङ्गमिति भाष्यात् स्वघटितसमुदाये स्वभेदोऽस्त्येवेत्येव वैयाकरणैरभ्युपेयम्। किञ्च घटाकाशोभयत्वावच्छेदे-नाकाशे द्वित्वस्य सत्त्वेऽप्याकाशत्वावच्छेदेन द्वित्वावच्छिन्नप्रतियोगिता-कभेदतात्पर्य्येणाकाशो न द्वाविति प्रयोगो यथा तथा सखित्वावच्छेदेन सखित्वादेस्सखिघटितसमुदाये सत्त्वेऽपि सुसखित्वावच्छेदेन सखिशब्द-भिन्नत्वस्य सत्त्वे बाधकाभावः। किञ्च सुसखित्वरूपानुपूर्व्याः सखिघटित-समुदायत्वरूपत्वाभावेन स्वघटितसमुदायत्वावच्छेदेन स्वभिन्नत्वाभावेऽपि तादृशानुपूर्व्यवच्छेदेन सखिभिन्नत्वस्य निराबाधत्वमेव। किञ्च भेदविधे-यस्थले एव निरवच्छिन्नानुयोगिताकभेदस्यास्वीकार उद्देश्यतावच्छेदका-वच्छेदेनैव विधेयान्वयनियमात्। प्रकृते भेदस्य विधेयत्वाभावेन निरवच्छि-न्नानुयोगिताकभेदप्रतीतौ बाधकाभावेनादोषात्। शेखरकृता च नश्छव्य-प्रशान् अत्वसन्तस्य चाधातोरित्यादौ प्रशान् शब्दावयवभिन्ननकारान्त-पदस्य धात्ववयवभिन्नो योऽस्तदन्तस्येत्यर्थ इवात्रापि सखिशब्दावयव-भिन्नेकारान्तस्येत्येव सखिशब्दस्य तदवयवे लक्षणां स्वीकृत्यार्थोऽभ्युपेयते। अवयवोद्देश्यककार्य्ये समुदायो यत्र पर्य्युदस्यते तत्र समुदायबोधकपदानां स्वावयवपरत्वमिति नियमस्वीकारात्। तथा च सुसखिशब्दावयवेकारस्य सखिशब्दावयवभिन्नत्वाभावान्न सुसखिशब्दस्य घिसंज्ञेत्युच्यते। न च सखिवयवभेदस्येकारे नान्वयस्तदन्तविधिनेदन्त इत्यर्थे इकारस्य पदार्थै-कदेशत्वादिति वाच्यम्। उतश्च प्रत्ययादसंयोगपूर्वादित्यत्र तदन्तविधिना

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लब्धस्योदन्तस्यैकदेशे उकारे असंयोगपूर्वत्वस्येव ङमो ह्रस्वादचीत्यत्र ङमि ह्रस्वात्परत्वस्येव पदार्थैकदेशेऽप्यन्वयस्य स्वीकारात्। तदन्तविधिश्च शेषपदार्थं विशेष्यीकृत्य बोध्यः। लक्षणयैतादृशार्थे प्रमाणं यस्येति चेति सूत्रस्थं **भाष्यम्**। तत्र हि इवर्णस्य ईकारे परे लोपे किमुदाहरणमतिसखेरागच्छति सखीमतिक्रान्तोऽतिसखिः। सखिशब्दात्सख्यशिश्वीति भाषायामित्यनेन ङीषि अतिना समासे उपसर्जनह्रस्वे अतिसखिस्तत्र ङीष ईकारे परे सख्यवयवेकारस्य लोपाभावे दीर्घैकादेशे सखीशब्दस्य पूर्वान्तवद्भावेन सखीशब्दत्वं, उपसर्जनह्रस्वत्वे आनुमानिकस्थानिवद्भावेन सखिशब्दत्वम्। न च तस्य लाक्षणिकत्वात्सखिशब्देनाग्रहणमिति वाच्यम्। अतिदेशविषये प्रतिपदोक्तपरिभाषाया अप्रवृत्तेः। अन्यथाऽतिदेशस्य वैयर्थ्यापत्तेः। ततश्च घिसंज्ञा न स्याल्लोपे तु पूर्वान्तवद्भावाभावात् लाक्षणिकत्वात् कृतह्रस्वेकारान्तसखिशब्दस्य सखिशब्देनाग्रहणात् घिसंज्ञासिद्धेत्युक्तम्।

**प्राचान्तु** लोपाभावेऽपि अतिसखीतिसमुदायस्य सखिभिन्नत्वेन घिसंज्ञाया दुर्वारतया भाष्यासङ्गतिः स्पष्टैव। **नवीनमते** लोपे उक्तरीत्या इकारस्य सख्यवयवभिन्नत्वात्तदन्तस्य घित्वं तदभाव उक्तरीत्या तस्य सख्यवयवत्वेन तदन्तस्य घित्वाभावश्च स्पष्ट एवेति न भाष्यविरोधः। न च **नवीनमते**ऽपीदं भाष्यमसङ्गतमेव। लोपेऽपि प्रातिपदिकग्रहणपरिभाषया सखिशब्दत्वस्य ईकारान्ते आनुमानिकस्थान्यादेशभावेन च ह्रस्वान्ते सत्त्वेनेकारस्य सखिशब्दावयवत्वस्यैव सत्त्वेन घित्वाप्राप्तेरिति वाच्यम्। सखिशब्दस्य सख्यवयवपरत्वेन प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकत्वाभावेन परिभाषाया अप्राप्तेः। न च **नवीनमते**ऽपि ख्यत्यादितिसूत्रस्थं भाष्यमसङ्गतम्। तत्र हि किमर्थं विकृतनिर्देशो न सखिपतिभ्यामित्येवोच्येत, अतिसखेरित्यत्र माभूदित्युक्तम्। तत्र सखायमतिक्रान्त इत्यर्थे घिसंज्ञा नापत्तिरिकारस्य सख्यवयवत्वात्। सखीमतिक्रान्त इत्यर्थे विभक्तौ लिङ्गविशिष्टाग्रहणमिति निषेधात्प्रातिपदिकग्रहण इत्यस्या अप्रवृत्त्या श्रूयमाणस्य सखिशब्दस्य लाक्षणिकत्वेन च सखिशब्दात्परत्वाभावेन दोषाभावोदिति वाच्यम्। लक्षणप्रतिपदोक्तपरिभाषाया अनाश्रयणेनैतद्भाष्यस्य सत्त्वात्।

न चैवं सति **नवीनमते** भाष्यस्य न्यूनत्वापत्तिः। **प्राचीनमते** तु अङ्यन्त एव सखिशब्दस्तस्य प्रतिपदोक्तत्वान्न न्यूनत्वदोष इति वाच्यम्। तन्मतेऽपि अतिसखिशब्दात् ङसो विहितत्वेन सखिशब्दाद्विहितत्वाभावेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विहितविशेषणानाश्रयणेनैवैतद्भाष्यस्य सत्त्वमित्यस्य वक्तव्यत्वेनोभयमते न्यूनतायास्साम्यात्।

वस्तुतस्तु सखिपतिभ्यामित्येव कस्मान्नोक्तं ख्यत्यादिति विकृतनिर्देशः किमर्थ इत्यर्थके प्रकृतभाष्ये सखिपतिभ्यामित्युपलक्षणं खितिभ्यामित्यस्य यथाश्रुते लाघवाभावात्। तथा च विहितविशेषणे सख्युः पत्युरित्यत्राप्युत्वानापत्त्या विहितविशेषणानाश्रयणस्योचितत्वात् प्रतिपदोक्तपरिभाषानाश्रयणस्य निर्य्युक्तिकत्वात् दिग्योलक्षणपञ्चम्यपेक्षया ल्यबूलोपपञ्चम्याश्रयणे गौरवाच्च **प्राचीनमते** एवेदं भाष्यं समञ्जसम्।

---

## २१. प्रत्ययलोपे प्रत्ययलक्षणम् १।१।६२

आद्यप्रत्ययग्रहणाभावे लोपे सति प्रत्ययनिमित्तकं कार्य्यं भवतीत्यर्थे अपिपूर्वकादीङ्धातोः क्विपि समासे औ विभक्तौ **भागुरिमते** पिधानमित्यत्रेवोपसर्गाकारलोपे अनेकाच्त्वाभावेन यणोऽप्राप्तावियङि पियौ पिय इति सिद्ध्यति। इदानीमकारस्य लोपसत्त्वाल्लोपे सति औविभक्तिरूपप्रत्ययनिमित्तक एरनेकाजिति यण् स्यात्। प्रत्ययग्रहणे सति प्रत्ययलोपाभावान्न भवति। ननन्देत्यादावितो लोपे लिङ्निमित्तक इजादेश्च गुरुमतोरिति आम् च स्यात्। प्रत्ययलोपाभावान्न भवति। न च कृतेऽपि प्रत्ययग्रहणे पियावित्यादौ दोष एव, क्विपो लोपसत्त्वादिति वाच्यम्। प्रत्यासत्त्या लुप्तप्रत्ययनिमित्तककार्य्यस्यैवानेनातिदेशेनादोषात्। प्रत्ययग्रहणाभावेऽपि लोपप्रतियोगिप्रत्ययनिमित्तकमेव कार्य्यं प्रत्यासत्त्येत्युक्तौ तु प्रत्ययग्रहणस्य वैयर्थ्यमेवेति बोध्यम्। प्रत्ययलोप इति सति सप्तमी। तेन पच भवतीत्यादौ तिङ्तिङ इति निघाते कर्त्तव्ये प्रत्ययलक्षणेन पदत्वं दधीयति मधूयतीत्यादौ प्रत्ययलक्षणेन सुबन्तत्वमादाय सुप आत्मन इति क्यच् वेभिदीतीत्यादौ प्रत्ययलक्षणेन यङो वेतीट् सिद्ध्यति। औपश्लेषिकसप्तम्यां तु प्रत्ययलोपाव्यवहितपूर्वस्य प्रत्ययनिमित्तककार्य्यमित्यर्थापत्तावुक्तेषु लक्ष्येषु प्रत्ययलक्षणं न स्यात्।

ननु प्रत्ययस्येत्यनुवृत्त्या सिद्धे आद्यप्रत्ययग्रहणं व्यर्थमेवेति चेत्—न। सामर्थ्यात् कृत्स्नप्रत्ययलोप इत्यर्थबोधनद्वारा प्रत्ययावयवलोपे प्रत्ययलक्षणाभावार्थत्वात्। न च प्रत्ययत्वस्य समुदायपर्य्याप्तत्वेन प्रत्ययावयवलोपे प्रत्ययलोपस्यैवाभावेन सूत्राप्रवृत्त्या ज्ञापने फलाभाव इति वाच्यम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यावद्विना न चारितार्थ्यन्तावज्ज्ञाप्यमिति न्यायेन प्रत्ययावयवे प्रत्ययत्वव्यवहारस्याप्यनेनैव ज्ञापनात्। अन्त्यज्ञापनादेवादेशप्रत्ययोरित्यत्र प्रत्ययपदस्य प्रत्ययावयवे लक्षणाश्रयणं न प्रत्ययावयवस्यापि प्रत्ययत्वात्। न च लक्षणां प्रत्ययावयवे प्रत्ययत्वव्यवहारं च विनाप्यवयवावयविभावसम्बन्धेन प्रत्ययस्य सकारेऽन्वयाददोष इति वाच्यम्, एकसम्बन्धेनैकस्मिन् द्वन्द्वघटकसर्वपदार्थानामन्वयाभावे द्वन्द्वस्यासाधुत्वापत्तेः। इदुदुपधस्य चाप्रत्ययस्येति सूत्रे चाप्रत्ययघटकप्रत्ययपदस्य प्रत्ययावयवे न लक्षणा, अवयवेऽपि प्रत्ययत्वस्यैव सत्त्वात्। न च लक्षणां विनापि प्रत्ययस्य विसर्गे वैयधिकरण्यान्वयेन प्रसज्यप्रतिषेधाश्रयणेन च प्रत्ययावयवविसर्गस्य न षत्वमित्यर्थेनादोष इति वाच्यम्, असमर्थसमासवाक्यभेदकल्पनागौरवात्। आद्यज्ञापनफलमाघ्नीयेत्यादावनुनासिकलोपाभावः। अन्यथा आङ्पूर्वाद्धन्धातोर्विधिलिङ इटोऽति सीयुटि लिङस्सलोप इति सकारलोपे गमहनेत्युपधालोपे होहन्तेरिति कुत्वनिष्पन्ने आघ्नीयेत्यत्र प्रत्ययावयवसकाररूपप्रत्ययलोपे तन्निमित्तकस्यानुदात्तोपदेशेत्यनुनासिकलोपस्य प्रत्ययलोपसूत्रेणापत्तिः। ज्ञापने तु प्रकृते कृत्स्नप्रत्ययस्य लोपाभावेन प्रत्ययलक्षणसूत्राप्राप्तौ झलादित्वाभावेन नलोपो न। एवं समिधमिच्छति समिध्यति क्विप्यलोपयलोपे टाविभक्तौ समिधेत्यादौ प्रत्ययलक्षणेनाकारमादायेनादेशोऽपि न, अवयवस्यैव लोपात्। अथ कृत्स्नप्रत्ययनिवेशेऽपि सुदृषत् प्रासाद इत्यादावसन्तत्वं प्रत्ययलक्षणेनानीयात्वसन्तस्येति दीर्घो मा भूदित्येतदर्थं प्रत्ययत्वव्याप्यधर्म्मस्यैव लुप्तप्रत्ययगतस्यातिदेशोऽनेनेत्यस्यावश्यं वक्तव्यतया आघ्नीयेत्यादौ लुप्तो यस्सकाररूपः प्रत्ययस्तद्वृत्तिझल्त्वं न प्रत्ययत्वव्याप्यमिति तस्यातिदेशाभावेनावयवलोपे न अपि तु कृत्स्नप्रत्ययलोप एवेति ज्ञापनस्य न फलमिति चेत्—न। प्रत्ययमात्रवृत्तिविषयताप्रयोजकं यत्पदन्तत्प्रतिपाद्यतावच्छेदकधर्म्मस्यैव प्रत्ययासाधरणधर्म्मपदेन विवक्षितत्वात् प्रत्ययावयवे प्रत्ययत्वव्यवहारे ज्ञापिते प्रकृते झल्पदप्रयोज्यविषयतायाः प्रत्ययाद्यवयवसकाररूपप्रत्ययनिष्ठायाः प्रत्ययत्वव्याप्यत्वात्ततः सुदृषदित्यादौ तु नात्वसन्तेति सूत्रघटकासुपदप्रयोज्या विषयता प्रत्ययत्वव्याप्या मेधा इत्यादावप्रत्ययासुपदेऽपि तस्यासत्त्वात्। अत एव मित्रशीरत्रिनेडित्यादावल्विध्यर्थं प्रत्ययलक्षणसूत्रमिति वार्त्तिकमते हलादित्वस्यानेनातिदेशः सिद्धोऽन्यथा शास इदं हलोः तृणह इमेत्यत्रत्यहल्पदस्य प्रत्ययमात्रबोधकत्वेऽपि हलादित्वस्य प्रत्ययत्वव्याप्यत्वाभावादतिदेशो न स्यात्। न च हलादौ कृङित्प्रत्यये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्याद्यर्थेन हलादिक्ङित्प्रत्ययत्वादिप्रत्ययत्वव्याप्यन्तस्यातिदेशेनादोष इति वाच्यम्, तस्यैकपदप्रतिपाद्यत्वाभावेनातिदेशालभ्यत्वात्। एकपद-प्रतिपाद्यधर्म्मस्यैवातिदेश इत्यस्यातिदेशस्वभावसिद्धत्वात्। न च प्रत्य-यावयवे प्रत्ययत्वारोपे राममित्यादावपि मकारमात्रस्य सुप्प्रत्ययत्वारोपे सुपि चेति दीर्घापत्तिरिति वाच्यम्। प्रत्ययत्वारोपेऽपि सुप्त्वस्यानारोपात् प्रत्ययादित्वप्रयुक्तं कार्य्यं प्रत्ययावयवमात्रस्य स्यादिति तु न आदिग्रहण-सामर्थ्येन कृत्स्नप्रत्ययादेरेव ग्रहणेनादोषात्।

ननु येनविधिरितिसूत्रभाष्ये अचिश्नुधात्वितिसूत्रे तदादिविध्यभावे अचि प्रत्यये परे इत्यर्थे श्रियौ भ्रुवावित्यत्रैव स्यान्न तु श्रियः भ्रुव इत्यादा-वित्युक्तन्तद्विरुद्धयेतास्प्रत्यययाकारस्यापि प्रत्ययत्वादिति चेत्-न। अत्र प्रत्य-यग्रहणाभावेनाङ्गस्येति षष्ठ्यर्थान्वयानुरोधेन निमित्तपदाध्याहारेणाचूरू-पेऽसंज्ञानिमित्ते इत्यर्थस्यैव सत्त्वेन प्रत्ययावयवे प्रत्ययत्वारोपेऽप्यङ्गसंज्ञा-निमित्तत्वाभावादङ्गसंज्ञासूत्रे प्रत्ययविधिग्रहणेन विधेयताश्रयीभूतप्रत्यय-स्यैवाङ्गसंज्ञानिमित्तत्वात्। न च प्रत्ययावयवे प्रत्ययत्वव्यवहारे प्रत्य-यस्थात्कात्पूर्वस्येति सूत्रे स्थग्रहणस्य वैयर्थ्यं प्रत्ययस्थस्यापि प्रत्ययत्वा-दिति वाच्यम्, इष्टापत्तेः प्रत्ययावयवे प्रत्ययत्वव्यवहाराभावेऽपि ककार-रूपवर्णमात्रस्य प्रत्ययस्याभावेन सामर्थ्यादेव प्रत्ययस्थककारलाभेन स्थग्र-हणवैयर्थ्यस्यैव सत्त्वात् केति संघातग्रहणन्तु न तत्र तथा सति अर्थ-वद्ग्रहणपरिभाषयाऽर्थवत एव ग्रहणापत्तौ कारिकेत्यादावित्वानापत्तेः।

नन्विदं सूत्रम्मास्तु दधि मध्वित्यादौ स्थानिवत्सूत्रेण लोपरूपादेशस्य सुप्त्वातिदेशेन पदत्वसिद्धेरिति चेत्-अत्र वार्त्तिककारा अतृणेट् मित्रशीरि-त्यादावल्विध्यर्थं प्रत्ययलक्षणसूत्रमित्याहुः। तथा हि—तृह्धातोर्लङि तिपीकारलोपे हल्ङ्यादिलोपे श्नमोऽकारस्य प्रत्ययलक्षणेन हलादिपित-मादय तृणह इमित्यनेनेमागमे अतृणेडिति, मित्राणि शास्तीति विग्रहे शास्तेः क्विपस्सर्व्वापहारे प्रत्ययलक्षणेन हलादिकितमादाय शास इदङ् हलोरित्युपधाया ईत्वे मित्रशीरिति भवति। स्थानिवद्भावेन हलादित्वन्तु न, अनल्विधाविति तन्निषेधात्। हलादित्वं चात्र प्रत्ययस्यासाधारणं यथातथोक्तम्। गवे हितं गोहितमित्यादावच्त्वस्य प्रत्ययासाधारणत्वा-भावेन न प्रत्ययलक्षणम्। चित्रायां जाता चित्रेत्यादौ च प्रत्ययलक्षणे-नाणवृद्धावप्यणोऽकारवृद्ध्यभावेन टिड्ढेति न ङीप् न चात्राकारपदेनाण्-प्रत्ययाकारस्यैव बोधेन प्रत्ययत्वव्याप्यविषयताप्रयोजकत्वेन तत्प्रतिपाद्य-तावच्छेदकत्वस्यापि निरुक्तप्रत्ययासाधारणत्वेन तद्वृद्धिरपि प्रत्यय-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्षणसूत्रेण स्यादिति ङीप् दुर्वार इति वाच्यम्। अणवृद्धेरेवाभावात् प्रधानाप्रधानन्यायेन यत्र प्रत्ययासाधारणधर्म्मावच्छिन्नस्य प्राधान्येनाश्रयणन्तत्रैव प्रत्ययलक्षणसूत्रप्रवृत्तेः। प्राधान्यञ्चावयवावयविभावसम्बन्धावच्छिन्नप्रकारतानाश्रयत्वमिति **विजयायां** विस्तरेण प्रतिपादितम्। अत्र चाणस्तादृशप्रकारताश्रयत्वस्यैव सत्त्वात् प्रत्ययस्यासाधारणेति तु तल्लक्षणमित्येव सिद्धे प्रत्ययग्रहणाल्लभ्यते प्रत्ययस्यासाधारणेति प्रधानस्यैवेत्यंशाभ्यां वर्णाश्रये नास्ति प्रत्ययलक्षणमिति फलितम्। फलितेऽपि निषेधे वर्णत्वव्याप्यधर्म्मावच्छिन्नस्य प्राधान्येनाश्रयणमेव वर्णाश्रयपदेन विवक्षितं प्रधानाप्रधानन्यायात्तेनातृणेट्मित्रशीरित्यादौ न निषेधः। भाष्यकारस्तु स्थानिवत्सूत्रेण सिद्धिं कृत्वेदं सूत्रं नियमार्थमित्युवाच। मित्रशीरित्यादावलुविद्धयर्थन्तु न शास इदित्येको योगः। शास उपधाया इत्वं क्ङिति परे इति तस्यार्थः। अङीत्यपरो योगः। शास उपधाया इदङि परे इत्यपरस्यार्थः। पूर्वेणैव सिद्धे अजादौ क्ङिति चेदङ्येवेति नियमादाङतिरिक्ताजादौ दोषाभावेन हल्ग्रहणाकरणेन कित्वस्य स्थानिवद्भावेनैव लाभाच्च। एवमतृणेडित्यादावपि तृणह इम इति सूत्रे हल्ग्रहणं नानुवर्तते नाभ्यस्तस्याचीत्यतोऽचिनेत्यनुवर्त्त्याजादौ नेत्यर्थेनाजादौ दोषाभावेन पित्वस्य स्थानिवद्भावेन लाभाच्च प्रत्ययलोपसूत्रं विनैवेष्टसिद्धेः।

ननु कीदृशो नियमः कृत्स्नप्रत्ययलोपे लुप्तप्रत्ययवृत्तिप्रत्यया साधारणधर्म्मावच्छिन्ननिमित्तककार्य्यमेव नान्यदित्याकारकः व्रीहीनवहन्तीत्यादाववघात एव नान्यत् नखविदलनादिकमिति वत् तर्हि राजात्रेत्यादौ दीर्घादिकन्न स्यात्। कृत्स्नप्रत्ययलोप एव लुप्तप्रत्ययप्रवृत्तिप्रत्ययासाधारणधर्म्मावच्छिन्ननिमित्तकं कार्य्यं नान्यत्रेत्याकारको वा समासे एव प्रातिपदिकसंज्ञा नान्यत्रेतिवदिति चेत्तर्हि राम इत्यादावपि दधीत्यत्र लुप्तप्रत्ययवृत्तिप्रत्ययासाधारणधर्म्मः सुप्त्वं तदवच्छिन्ननिमित्ततार्क पदत्वं न स्यात्। नान्यत्रेत्यनेनैतद्विधेयस्यैवान्यत्र निषेध इत्यर्थस्यातिप्रसङ्गायावश्यकत्वेन स्थानिवद्भावरूपविधेयान्तरस्य प्रत्ययलोपे निषेधाभावेन सुदृपत्प्रासाद इत्यादौ स्थानिवद्भावेन दीर्घस्यापत्तेस्तस्य नियमफलत्वस्य भाष्योक्तस्य भङ्गापत्तेश्च। किञ्च नियमस्थले व्यर्थशास्त्रीयोद्देश्यतावच्छेदकव्यापकं यद् व्यर्थताप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं तद्धर्मावच्छिन्नातिरिक्तत्वेन व्यर्थताप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचो भवति यथा समासग्रहणनियमेन समासत्वव्यापकमर्थ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वत्वव्याप्यं यत् पूर्वभागपदघटितसमुदायत्वं तदवच्छिन्नातिरिक्तत्वेनार्थवत्वावच्छिन्ने संकोचस्तथा कृत्स्नप्रत्ययलोपत्वव्यापकमादेशत्वव्याप्यं किं यदवच्छिन्नातिरिक्तत्वेनादेशे संकोचस्स्यादिति चेत्—अत्रोच्यते–यथा समासे एव न तद्भिन्ने पूर्वभागपदघटितसमुदाये नियमस्य सजातीयविषयत्वात् तथा कृत्स्नप्रत्ययलोपे एव न तद्भिन्ने प्रत्ययलोपे अवयवरूपप्रत्ययलोपे इति यावदिति तेन राम इत्यादौ पदत्वस्य नानापत्तिः। परन्तु नेदं युक्तं सुदृषदित्यादौ स्थानिवत्वस्यावारणात्।

इदन्तु तत्त्वं यथा व्रीहीनवहन्तीत्यादावववघात एवेत्यनेन व्रीहिगतं नखविदलनमेव निषिध्यते न सेचनदर्शनादिकं नियमस्य सजातीयविषयत्वात्तथा कृत्स्नप्रत्ययलोपे लुप्तप्रत्ययवृत्तिप्रत्ययासाधारणधर्म्मावच्छिन्ननिमित्तताकमेव कार्य्यं नान्यदित्यनेनापि लुप्तप्रत्ययसम्बन्ध्येव तद्भिन्नं कार्य्यं निषिध्यते न दीर्घादिकं नियमस्य सजातीयविषयत्वादेवेति सदृषदित्यादौ दीर्घो न स्थानीवद्भावेनेति न तत्र फलत्वप्रदर्शनपरभाष्यविरोधोऽपि। किञ्च स्वीयोद्देश्यतावच्छेदकं कृत्स्नप्रत्ययलोपत्वं तद्व्यापकं वैयर्थ्यप्रयोजकस्थानिवत्सूत्रीयोद्देश्यतावच्छेदकादेशत्वस्य व्याप्यं प्रत्ययलोपत्वं तदवच्छिन्नातिरिक्तत्वेनादेशत्वावच्छिन्ने संकोचात्प्रत्ययलोपे स्थानिवद्भावस्य न प्राप्तिरिति सुदृषदित्यत्र न स्थानिवद्भावः नापि प्रत्ययलक्षणं प्रत्ययासाधारणधर्म्माभावात्। न च सुदृषदिति न नियमफलमत्वन्तसाहचर्य्येण दीर्घविधौ श्रूयमाणासन्तस्यैव ग्रहणेन दीर्घाप्रवृत्तेरिति वाच्यम्। भवन्तमाचष्टे भावयतीत्यादौ णिजन्तात् क्विपि णिलोपटिलोपयोर्भावित्यादावत्वन्तस्य स्थानिवद्भावेनैव सत्त्वेन साहचर्य्यस्यासम्भवात्। न च तत्र णिलोपस्य स्थानिवत्त्वेन दीर्घाप्रवृत्त्या श्रूयमाणात्वन्तस्थल एव दीर्घप्रवृत्त्या तत्साहचर्य्याश्रयणं युक्तमेवेति वाच्यं, दीर्घविधौ स्थानिवत्वनिषेधात्। निषेधविधौ सापादिकस्यापि दीर्घस्य ग्रहणमिति शेखरकृता सिद्धान्तितत्वात्। किञ्च साहचर्य्याश्रयणं वाक्यार्थबोधात्प्राक् तस्मिन् क्षणेऽत्र दीर्घो भवति न भवतीति लक्षणैकचक्षुषामनिर्णयेन लक्ष्यनिर्णयापेक्षया साहचर्य्याश्रयणस्यायुक्तत्वाच्च। अथान्तग्रहणं न कर्त्तव्यमत्वसोरिति षष्ठ्यन्तं पठनीयम्। तदन्तविधिनाऽत्वसन्तस्येत्यर्थलाभस्तथा च धातुभिन्नो योऽसन्तस्तदवयवो वोऽसुपदीयनिर्दिश्यमानस्तस्योपधाया दीर्घ इत्यर्थस्यैव लाघवानुगृहीतस्योचितत्वेन स्थानिवद्भावेन सुदृषदग्रेऽसुबुद्धावपि तदुपधाया अभावेन दीर्घाप्राप्तिः स्थानिवद्भावादिना हि यस्य बुद्धिरुपजायते तन्निमित्तकस्यैव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कार्य्यस्य प्रवृत्तिर्न्न तु तदुपधानिमित्तकस्य तावत्पर्य्यन्तमतिदेशस्य व्यापाराभावादिति न नियमफलमिति चेत्—

अत्रोच्यते—सुटषदित्यत्रैवासन्तत्वं स्थानिवद्भावेनादायासमायामेधेत्यादिना विनिप्रत्ययापत्तिः। मेधामाचष्टे इत्यर्थे णिचि टिलोपे क्विपि णिलोपे धान्तस्यापि मेधाशब्दस्य लाभेन तत्साहचर्य्येण श्रूयमाणस्यैवासोग्रहणमिति प्रकृते न दोष इत्यस्य वक्तुमशक्यत्वात्। प्रथिमानमाचष्टे णिचि क्विपि टिलोपे णिलोपे प्रथिमिति तस्य समीपमुपप्रथिममित्यत्राव्ययीभावे स्थानिवद्भावेनानन्तत्वमादायानश्चेति टच् वाग्मिनमाचष्टे णिचि क्विपि टिलोपे णिलोपे च वहुशब्देन वहुव्रीहौ स्थानिवद्भावेनेन्नन्तत्वमादाय इनस्त्रियामित्यनेन कप् च न तसिप्रत्ययान्तसर्वतसित्यस्यानुकरणे सर्वतस् तस्मादाचष्टे णिचि टिलोपे क्विपि णिलोपे सौ परेऽत्वसन्तस्य चेति दीर्घः स विद्यते अस्येत्यर्थे असमायामेधेत्यादिना विनिप्रत्ययश्च न स्थानिवत्सूत्रोद्देश्यतावच्छेदकादेशत्वावच्छिन्ने प्रत्ययलोपातिरिक्तत्वेन संकोचात्। अत्र प्रत्ययावयवे प्रत्ययत्वव्यवहारेण प्रत्ययलोपस्यैव सत्त्वात् स्थानिवत्सूत्राप्राप्तेः कृत्स्नप्रत्ययलोपाभावात् अन्त्वादेः प्रत्ययासाधारणधर्म्मत्वाभावाच्च प्रत्ययलोपसूत्रस्य चाप्राप्तेः। यदि च कृत्स्नप्रत्ययवृत्तिप्रत्ययासाधारणधर्म्मनिमित्तककार्य्यमेव न तु लुप्तप्रत्ययनिमित्तकन्तद्भिन्नं कार्य्यमिति नियमस्वरूपन्तदा कृत्स्नप्रत्ययलोपातिरिक्तेषु पूर्वप्रयोगेषु स्थानिवद्भावप्रवृत्तौ वाधकाभावेन टजादीनां सिद्धिरेव फलम्। कृत्स्नप्रत्ययस्य निवेशे नियमफलन्तु शिखिनमाचष्टे णिचि टिलोपे क्विपि णिलोपे शिख् बहुशब्देन वहुव्रीहौ स्थानिवद्भावेनेन्नन्तत्वमादायेनस्त्रियामिति कप् न नापि प्रत्ययलक्षणेन प्रत्ययासाधारणधर्म्माश्रयणाभावात् दण्डिनमाचष्टे णिचि टिलोपक्विप्णिलोपेषु कृतेषु वहुशब्देन बहुव्रीहावपि पूर्वोक्तरीत्या न कप्।

नन्ववयवलोपे मा भूदित्यस्याग्नीयेति फलं शेखरोक्तं न युक्तं, झल्त्वस्य प्रत्ययासाधारणत्वाभावेन कार्त्स्न्यनिवेशाभावेऽपि प्रत्ययलक्षणस्याप्राप्तेरिति चेत्—न। प्रत्ययावयवे प्रत्ययत्वव्यवहारे तत्र झल्पदं प्रत्ययमात्रवृत्तिविषयताप्रयोजकमेव। तत्पदप्रतिपाद्यतावच्छेदकञ्च झल्त्वमिति भवति तत्प्रत्ययासाधारणं प्रत्ययमात्रंवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकत्वस्यैव प्रत्ययासाधारणत्वस्योक्तत्वादिति दिक्।

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## २२. यू स्त्र्याख्यौ नदी १।४।३

यूपदेन दीर्घयोरेवेकारोकारयोर्ग्रहणमन्यथा ङिति ह्रस्वश्चेति सूत्रे ह्रस्वयोरेवानयोरनुवृत्तौ ह्रस्वग्रहणस्य वैयर्थ्यापत्तेर्दीर्घादिति निषेधाद्यू इति रूपासिद्धिस्तु न छन्दोवत्सूत्राणि भवन्तीत्युक्तेर्वा छन्दसीति पूर्वसवर्णदीर्घेण तत्सिद्धेः। स्त्रियमेवाचक्षाते स्त्र्याख्यौ ख्याधातोर्म्मूलविभुजादित्वात् कप्रत्ययः स्त्रियामित्युक्त्यैव स्त्रीवाचकावित्यर्थलाभसम्भवेनाख्याग्रहणसामर्थ्यादेवकारार्थान्तर्भावेण वृत्तिबोधनद्वारा नित्यस्त्रीलिङ्गावित्यर्थलाभस्तेन ग्रामं नयतीति ग्रामणीरित्यत्र नदीत्वन्न ग्रामनयनकर्त्तृत्वेन स्त्रीबोधकत्वेऽपि तेनैव रूपेण पुम्बोधकत्वस्यापि सत्त्वेन नित्यस्त्रीत्वाभावात्।

ननु किमिदं नित्यस्त्रीत्वमिति चेत्—अत्र **वृत्तिकारः**—आध्यै प्रध्यै ब्राह्मण्यै इति **भाष्ये** प्रयोगो दृश्यते। तत्र प्रकृष्टा धीर्य्यस्या इति बहुव्रीहिस्तु न, नद्यृतश्चेत्यनेन नद्यन्तोत्तरपदकत्वान्नित्यं कबापत्तेः, किन्तु प्रकृष्टं ध्यायतीति प्रधीस्तत्र नदीत्वाय पदान्तरं विनापि स्त्रीबोधकत्वन्नित्यस्त्रीत्वं प्रकृष्टध्यानकर्तृत्वस्य स्त्रियाः सम्भवेन प्रधीरित्येतन्मात्रोच्चारणेऽपि स्त्रीबोधकत्वेन नदीत्वम्। ग्रामणीशब्दस्य तु ग्रामनयनकर्त्तृत्वस्य शक्तत्वाद्भयरहितत्वाच्च पुंधर्म्मतया स्त्र्यादिशब्दसमभिव्याहारमन्तरा स्त्रीबोधकत्वाभावेन नदीत्वाभावः। न च स्त्रीविषयावेव यौ यू नित्यमितिभाष्यविरोधस्तेन हि एवकारश्रवणात् लिङ्गान्तराबोधकस्यैव स्त्रीबोधकस्य नित्यस्त्रीत्वं लभ्यते इति वाच्यम्। एवकारस्य नित्यमित्यनेनान्वयः। तथा च यौ यू नित्यमेव स्त्रीविषयौ। नित्यमेवेत्यस्य सर्वदैवेत्यर्थः। पदान्तरं विनापीति यावदित्येतस्मादपि भाष्यात् पदान्तरं विनापि स्त्रीबोधकत्वमित्यस्यैव लाभादित्याह—तन्न। यदुत्तरमेवकारस्तदर्थ एव तदर्थस्यान्वयनियमेन भाष्याक्षरैस्तादृशार्थालाभात् स्त्रीविषयावेवेत्यस्य स्त्रीत्वेतरलिङ्गाबोधकावित्यस्यैव शब्दमर्य्यादया लाभेन स्त्रीत्वबोधकत्वे सति स्त्रीत्वेतरलिङ्गाबोधकत्वं नित्यस्त्रीत्वम्। न च प्रध्यै ब्राह्मण्यै इति भाष्यविरोधः। प्रकृष्टध्यानकर्त्तृत्वेन पुम्बोधकस्यापि प्रधीशब्दस्य सत्त्वेन नदीत्वानापत्त्याऽऽटोऽभावापत्तेरिति वाच्यं, बहुव्रीहेरेव तत्र सत्त्वात्। कबापत्तिस्तु न ऋदन्तसाहचर्य्येण। वृत्तिप्राक्कालिकनदीत्वस्यैव ग्रहणेन कपोऽप्राप्तेर्धीशब्दस्य समासात्प्राक् नेयङुवङिति निषेधेन नदीत्वाभावात् धीशब्दार्थध्यानक्रियारूपधात्वर्थ एव प्रकर्षस्यान्वयेन प्रशब्दस्य गतित्वाद्यण्। नन्वानुपूर्व्यैक्येन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दैक्यात् ङ्यन्तकुमारीशब्दस्याचारक्विप्क्यज्निष्पन्नपुंबोधककुमारीश-ब्दसमानाकारकत्वेनैक्यात् ङ्यन्तकुमारीशब्दस्य स्त्रीबोधकत्वेऽपि स्त्रीत्वे-तरपुंस्त्वरूपलिङ्गबोधकत्वस्यापि सत्त्वेन नित्यस्त्रीत्वानापत्तिरुच्चारणभेदेन शब्दभेदात् क्यजादिनिष्पन्नकुमारीशब्दो भिन्न एवेति। तस्य पुंबोधकत्वेऽपि ङ्यन्तकुमारीशब्दस्य पुंबोधकत्वाभावान्न नदीत्वानुपपत्तिरिति तु न युक्तम्। प्रधीः स्त्रीत्यादावपि प्रधीः पुमानित्यत्रत्य प्रधीशब्दभिन्नतया पुंबो-धकत्वाभावेन नदीत्वापत्तेरिति चेत्—अत्रोच्यते—धर्म्मविशिष्टत्वं नित्य-स्त्रीत्वम्। वैशिष्ट्यञ्च स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताक-बोधजनकत्वेन तात्पर्य्यविषयत्वस्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतर-लिङ्गनिष्ठप्रकारताकबोधाजनकत्वोभयसम्बन्धेन। ङ्यन्तकुमारीशब्दे प्रथ-मवयोविशिष्टत्वरूपधर्मवैशिष्ट्यसत्त्वान्नित्यस्त्रीत्वं तद्धर्मावच्छिन्नविशेष्य-तानिरूपितस्त्रीत्वनिष्ठप्रकारताकबोधजनकत्वस्य तद्धर्म्मावच्छिन्नविशेष्य-तानिरूपितपुंस्त्वादिनिष्ठप्रकारताकबोधाजनकत्वस्य च सत्त्वात्। यद्यपि तस्यैव शब्दस्य कुमारी पुरुष इत्यादौ पुंस्त्वबोधकत्वमप्यस्ति तथापि कुमा-रीकर्म्मकाचरणसदृशाचरणादिकर्त्तृत्वावच्छिन्ने पुंस्त्वस्यान्वयो न प्रथमव-योविशिष्टत्वावच्छिन्न इति न दोषः। अथ सेनां नयतीति सेनानीरित्यादौ सेनात्वधर्म्मवैशिष्ट्यस्य सेनानीशब्दे सत्त्वान्नित्यस्त्रीत्वापत्तिस्सेनात्वाव-च्छिन्ने स्त्रीत्वबोधकत्वस्य तदवच्छिन्ने पुंस्त्वाद्यबोधकत्वस्य च सेनानी-शब्दे सत्त्वात्। न च सम्बन्धघटकविशेष्यतायां मुख्यत्वनिवेशेन सेनात्वा-वच्छिन्नविशेष्यतायां नयननिष्ठविशेष्यतानिरूपितकर्म्मत्वसम्बन्धावच्छि-न्नप्रकारतासामानाधिकरण्यात्प्रकारत्वासामानाधिकरण्यरूपमुख्यत्वाभा-वेनादोष इति वाच्यं, कुमारीत्यादावपि तत्कुमारीसम्बन्धितात्पर्य्यकस-र्वनामशब्दजन्योपस्थितीयप्रकारतासामानाधिकरण्यसत्त्वान्नित्यस्त्रीत्वाना-पत्तेः, कुमारीबन्धुरिति समासे विशेष्यताया मुख्यत्वाभावान्नदीत्वाना-पत्त्या नदीबन्धुनीति स्वरानापत्तेश्च। न च धर्म्मवैशिष्ट्यनियामकस-म्बन्धः स्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपकोपस्थित्यजनकत्व-रूपस्तृतीयोऽपि निवेश्यते। प्रकृते सेनात्वावच्छिन्नप्रकारतानिरूपितनय-ननिष्ठविशेष्यताकोपस्थितिजनकत्वान्न दोष इति वाच्यम्। क्यजन्तकुमा-रीशब्देऽपि नित्यस्त्रीत्वानापत्त्या नदीत्वानापत्तेस्तत्र हि कुमारीकर्म्मके-च्छाकर्त्तृत्वावच्छिन्ने पुम्बोधकत्वेऽपि प्रथमवयोविशिष्टत्वरूपधर्म्ममादा-यैव नित्यस्त्रीत्वं वक्तव्यम्। तद्धर्म्मावच्छिन्नप्रकारतानिरूपितेच्छानिष्ठविशे-ष्यताकोपस्थितिजनकत्वस्यैव सत्त्वादिति चेत्—अत्रोच्यते—वृत्तेः प्राक्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुमारीशब्दे उक्तसम्बन्धत्रयेण धर्म्मवैशिष्ट्यसत्त्वेन यथोद्देशपक्षमाश्रित्य जातं नदीत्वमादायैव क्यजादिवृत्तावपि नदीत्वप्रयुक्तमाडादिकार्य्योपपत्तिः। न च कार्य्यकालपक्षे कार्य्यप्रवृत्तिसमये संज्ञाया अपेक्षणाद्वृत्तावेव कार्य्यस्य कर्त्तव्यतया तत्रैव नदीसंज्ञायाः कर्त्तव्यत्वेन तत्र नित्यस्त्रीत्वघटकतृतीयसम्बन्धाभावेन नदीत्वानापत्तिस्तथाप्यवशिष्यत एव। तदर्थं तृतीयसम्बन्धानिवेशश्चेत्सेनानीशब्दे दोषस्तदर्थन्तृतीयसम्बन्धस्थाने स्वावच्छिन्ननिरूपितशक्तिपर्य्याप्त्यधिकरणत्वं निवेश्यते वृत्तौ कुमारीशब्दे कुमारीकर्म्मकेच्छाकर्तृत्वावच्छिन्ननिरूपितशक्तेरिव प्रथमवयोविशिष्टत्वावच्छिन्ननिरूपितशक्तिपर्य्याप्तेरपि सत्त्वाद्धर्म्मवैशिष्ट्योपपत्तिः। सेनात्वावच्छिन्नशक्तिपर्य्याप्तिश्च न सेनानीशब्द इति न तस्य नित्यस्त्रीत्वम्। सेनाशब्दस्य तु नित्यस्त्रीत्वमिष्यत एवेति सर्वं समञ्जसम्।

स्वावच्छिन्नेत्यादेश्च स्वपर्य्याप्तावच्छेदकतानिरूपितावच्छेद्यतावच्छक्यतानिरूपितशक्ततापर्य्याप्त्यधिकरणत्वमर्थ इति न सेनानीशब्दे विशिष्टशक्तिमादाय दोषः। प्रथमलिङ्गग्रहणञ्चेतिवार्त्तिकस्यावयवस्त्रीविषयत्वात् सिद्धमिति भाष्यस्य चैतादृशनित्यस्त्रीत्वे एव तात्पर्य्यम्। धर्म्मविशिष्टत्वं नित्यस्त्रीत्वम्। वैशिष्ट्यञ्च-स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताकबोधजनकत्वेन तात्पर्य्यविषयत्वस्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताकबोधाजनकत्वस्वपर्य्याप्तावच्छेदकतानिरूपितावच्छेद्यतावच्छक्यतानिरूपितशक्ततापर्य्याप्त्यधिकरणत्वैतत्त्रितयसम्बन्धेनाद्यस्य व्यावर्त्त्यं जिह्रेतीती ह्रीरिति लज्जात्वमादाय न तत्र दोषः; द्वितीयस्य प्रकृष्टं ध्यायतीति प्रधीरिति, तृतीयस्य सेनानीरिति निष्कर्षः।

---

## २३. ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७

ननु ह्रस्वो नपुंसके इत्येव सिद्धे प्रातिपदिकग्रहणं व्यर्थम्। न च नपुंसके इत्यस्य नपुंसकत्वविशिष्टबोधकस्येत्येवार्थस्तथा च वारिणी इति विभक्त्यन्तस्यापि नपुंसकत्वविशिष्टबोधकत्वापत्तिः। प्रातिपदिकग्रहणे तु प्रातिपदिकत्वाभावान्न दोष इति वाच्यम्, दीर्घशीविधानसामर्थ्येन ह्रस्ववारणसम्भवात्। न च ह्रस्वविधाने शिसर्वनामस्थानमिति सर्वनामस्थानत्वापत्त्या ज्ञाने इत्यादौ नपुंसकस्य झलच इति नुमापत्त्या दीर्घप्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ह्रणस्य वैयर्थ्याभावः इति वाच्यम्, दीर्घविधानेऽपि ह्रस्वे कृते तद्दोषता-दवस्थ्यात्। अथ लाक्षणिकत्वात्तदा न दोष इति चेत्तर्हि नपुंसकत्वविशिष्टवाचकस्य ह्रस्व इत्यर्थाद्विभक्त्यन्तस्य वारिणी इत्यस्य वाचकत्वाभावान्न दोषः। न च नपुंसकत्वविशिष्टवाचकस्यापि पुंस्त्वविशिष्टबोधनेच्छयोच्चरितस्योभयलिङ्गस्य प्रैशब्दस्य ह्रस्वत्वापत्तिः। स्वशक्यत्वस्वजन्यबोधविषयत्वेन तात्पर्य्यविषयत्वोभयसम्बन्धेन स्वविशिष्टनपुंसकत्वविशिष्टे विद्यमानस्य ह्रस्व इत्यर्थेनातिव्याप्त्यव्याप्तिपरिहारसम्भवादिति चेत्—अत्र शेखरकारेण प्रातिपदिकग्रहणं सत्त्वप्रधानप्रातिपदिकग्रहणार्थं तेन काण्डे इत्यस्य पूर्वान्तवद्भावेन प्रातिपदिकत्वस्य नपुंसकत्वविशिष्टबोधकत्वस्य च सत्त्वेऽपि न ह्रस्वत्वं सत्त्वप्रधानत्वाभावादित्युक्तम्।

अत्रेदं विचार्य्यते—किमिदं सत्त्वप्रधानत्वम्? ननु सत्त्वं द्रव्यं तत्प्रधानं यस्येति व्युत्पत्त्या सत्त्वनिष्ठविशेष्यताकबोधजनकत्वम्। काण्डे इत्यत्र प्रत्ययार्थाधिकरणत्वस्यैव विशेष्यतया काण्डरूपद्रव्यस्य तत्प्रति विशेषणत्वेनादोषः। न च काण्डत्वनिष्ठप्रकारतानिरूपितविशेष्यताया अपि द्रव्ये सत्त्वेन दोष एवेति वाच्यम्, मुख्यविशेष्यताया निवेशेनादोषात्। काण्ड निष्ठविशेष्यताया अधिकरणत्वनिष्ठविशेष्यतानिरूपितप्रकारतासामानाधिकरण्यस्यैव सत्त्वेन प्रकारत्वासामानाधिकरण्यरूपमुख्यत्वाभावात्।

ननु विभक्तेर्द्योतकत्वेन द्योत्यार्थस्य प्रकृत्यर्थे विशेषणतयैव भानं अधिकरणत्वशक्तिमान् क्रियाकारकभावश्च सप्तम्यर्थस्तत्राधिकरणत्वशक्तिमतश्च प्रकृत्यर्थेऽभेदेनान्वयः। क्रियाकारकभावश्च प्रकृत्यर्थसंसर्गतया भासते अधिकरणत्वशक्तिमदभिन्नकाण्डविशिष्टा क्रियेति बोध इति शेखरकृत्सिद्धान्तः। तथा च काण्डनिष्ठा मुख्यैव विशेष्यता। न च तावतापि क्रियानिष्ठविशेष्यतानिरूपितप्रकारतायास्तत्र सत्त्वेनामुख्यत्वमेवेति वाच्यम्, इतरपदप्रयोज्यविशेष्यतामादाय दोषनिस्तारस्य श्रीपमस्तीत्यादावप्यस्तिक्रियामादाय दोषापत्त्या वक्तुमशक्यत्वात्। तादृशविशेष्यताव्यावृत्तिस्तु द्रव्यविशिष्टस्य प्रातिपदिकस्य ह्रस्वः। वैशिष्ट्यञ्च स्वनिष्ठविशेष्यताप्रयोजकत्वस्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाप्रयोजकत्वोभयसम्बन्धेनेत्यर्थेनेत्यवगन्तव्यमेवञ्च काण्डे इत्यादौ दोष एवेति चेत्—अत्रोच्यते—यद्यपि संसर्गतया भासमाने विशेष्यता न भवत्यपि तु संसर्गतैव तथापि प्रतियोगिनं प्रति प्राधान्यमस्ति। तम्प्रति प्रतियोगिनश्चाप्राधान्यम्। संसर्गनिष्ठप्रधानताप्रयोजिका च सप्तम्येव। राज्ञः पुरुष इत्यादौ स्वत्वादेस्संसर्गस्य षष्ठीवाचिकेति भाष्येणान्वयाभिधानवादाश्रयणात्। प्रकृते च सप्तम्याः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काण्डे इत्यत्रैवान्तर्भावात् क्रियाकारकभावसंसर्गनिष्ठप्रधानताप्रयोजकत्वं काण्डे इत्यस्यैव स्वनिष्ठप्रधानताख्यविषयताप्रयोजकत्वस्वनिष्ठाप्रधानता-निरूपितप्रधानताख्यविषयत्वाप्रयोजकत्वोभयसम्बन्धेन द्रव्यविशिष्टप्रा-तिपदिकस्य ह्रस्व इत्यर्थः। प्रकृते च काण्डनिष्ठाप्रधानतानिरूपितक्रिया-कारकभावसंसर्गनिष्ठप्रधानताप्रयोजकत्वेन काण्डे इत्यस्य ह्रस्वो न।

नन्वेवमपि काण्डे तिष्ठत इत्यादावाख्यातार्थे काण्डप्रतियोगिताकाभेद-स्याकाङ्क्षाभास्यतया तन्निष्ठप्रधानताप्रयोजकत्वस्य काण्डे इति प्रथमा-न्तस्याभावेन प्रथमार्थसंख्यायाश्चाभेदेन विशेषणस्थलेऽविवक्षितत्वेन विशे-षणतयैव प्रकृत्यर्थे भानेन वा पूर्वान्तवद्भावेन प्रातिपदिकत्वेन च ह्रस्वो दुर्वार इति चेत्—न। अभिहिते प्रथमेति वार्त्तिकात्। प्रथमाया अपि अन्याभिहितकर्तृत्वशक्तिमान् क्रियाकारकभावश्चार्थो वोध्यः पूर्ववत् कटं भीष्मं कुरु। अत्र कटोऽपि कर्म भीष्मादयोऽपि कर्म्मेति भाष्यात् कारकाणां क्रियायामन्वय इति भाष्योक्तनियमाच्चाभेदेन विशेषणस्यापि क्रियाकारक-भावसम्बन्धेन क्रियायामेव शाब्दोऽन्वयोऽभेदान्वयश्चाख्यातार्थादिना पार्ष्ठिको मानसस्तथा सति काण्डे इत्यस्य क्रियाकारकभावसंसर्गनिष्ठ-प्रधानताप्रयोजकत्वेनाख्यातार्थेऽभेदान्वयेऽप्यभेदस्य विशेषणविभक्त्यर्थ-स्यैवोक्तरीत्या संसर्गतया भानेन तन्निष्ठप्रधानताप्रयोजकत्वेन च ह्रस्वाप्राप्तेः।

अत्र केचिदयं प्रयासो विफलः पर्य्यन्यवल्लक्षणप्रवृत्त्या पूर्वं ह्रस्वत्वे-नैकादेशे विकारकृतलक्ष्यभेदस्योदवोढामिति भाष्याद्नाश्रयणेन तल्लक्ष्य-त्वात्पुनर्ह्रस्वाप्रवृत्तेरित्याहुः।

तन्न। सत्त्वप्रधानप्रातिपदिकस्य ह्रस्व इत्यर्थेन काण्ड इत्यत्र ह्रस्व-वारणपरभाष्यात् तदेकदेशमात्रविकारस्यैव लक्ष्याभेदप्रयोजकत्वादत्र तदे-कदेशाकारप्रत्ययेकारोभयविकारेणोक्तन्यायाविषयत्वात्। अत एव श्रीपमी-र्यस्य कुलस्य तत् श्रीपिकुलमित्यादौ ह्रस्वः।

---

## २४. नुमचिरेति नुट्स्यात्वे प्रराणामिति माधवः

**वस्तुतस्तु सन्निपातपरिभाषया नुड्यात्वन्न नामीति दीर्घस्तु आरम्भसामर्थ्यात्परिभाषां बाधते इत्युक्तं प्ररीणाम्**

माधवाशयस्त्वयं ह्रस्वनद्याप इति सूत्रीये स्वप्रवृत्त्युत्तरं प्रवृत्तिमता शास्त्रेण यज्ज्ञाप्यन्तत्साध्वित्याकारकेऽभ्यनुज्ञावाक्ये शास्त्रपदार्थे स्वनि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मित्तसन्निपातविघातकातिरिक्तत्वेन संकोचे सन्निपातपरिभाषया बोधिते राम आमिति स्थिते नुटि नामीतिदीर्घो न स्यात्तस्य नुड्निमित्तह्रस्वत्वविघातकत्वात्तथा च नामीति शास्त्रस्य वैयर्थ्यान्नामिति शास्त्रभिन्नं यत्स्वनिमित्तसन्निपातविघातकन्तदतिरिक्तत्वेनाभ्यनुज्ञावाक्यघटकशास्त्रपदार्थे संकोचे गौरवात्सन्निपातपरिभाषाप्रयुक्तः संकोचो नेत्येव नामीति सूत्रसामर्थ्यात् कल्प्यते। तथा च रामाणामित्यादौ नुटि कृते नामीति दीर्घस्य सिद्धिः। तद्वत् प्ररि आमिति स्थिते नुटि रायो हलीत्यात्वन्निर्वाधमेवेति प्रराणामित्येव साधु।

नन्वेवं ह्रस्वो नपुंसके प्रातिपदिकस्येति सूत्रीयाभ्यनुज्ञावाक्यघटकशास्त्रपदार्थेऽपि सन्निपातपरिभाषया स्वनिमित्तसन्निपातविघातकातिरिक्तत्वेन संकोचे इकोऽचि विभक्तावित्यस्य वैयर्थ्यमनैमित्तिकत्वाद्ध्रस्वे कृते नुमः प्रवृत्तेर्नुमा च प्रातिपदिकाजन्तयोर्विशेष्यविशेषणभावरूपसन्निपातस्य ह्रस्वनिमित्तस्य विघातात् तत्सामर्थ्यादुक्तरीत्या लाघवानुरोधेन सन्निपातपरिभाषाकृतसंकोचाभाव एव कल्प्येत। ततश्च ग्रामणिनी वारिणी इत्यादाविकोऽचि विभक्ताविति नुमिव ग्रामणि कुलमित्यादौ तुक् स्यादिति चेत्—न। नपुंसकप्रातिपदिकग्रामणिरूपसमुदायसापेक्षह्रस्वस्य ह्रस्वमात्रापेक्षतुगपेक्षया वहिरङ्गत्वेनासिद्धत्वादिति।

वस्तुतस्तु नाजानन्तर्य्ये इति निषेधात् नलोपस्सुविति सूत्रे कृति तुग्रहणाच्च षत्वतुकोरसिद्ध इति सूत्रे तुग्रहणाच्च ह्रस्वस्य पितीति तुकि कर्त्तव्ये वहिरङ्गपरिभाषाया अप्रवृत्तेरावश्यकत्वात् नयतीति निकुलमित्यादौ समाननिमित्तकत्वेन तया तुको वारणासम्भवाच्च सन्निपातपरिभाषयैव ग्रामणि कुलमित्यादौ तुको वारणीयतया लाघवानुरोधमनादृत्यैवेकोऽचि विभक्तावित्येतद्भिन्नं स्वनिमित्तसन्निपातविघातकं यत्तदतिरिक्तेन यज्ज्ञाप्यन्तत्साध्वित्याकारकस्यैवाभ्यनुज्ञावाक्यस्येकोऽचि विभक्तावित्येतद्वैयर्थ्यसहितसन्निपातपरिभाषासहकारेण कल्पना कार्य्या। तद्वन्नुट्शास्त्रीयाभ्यनुज्ञावाक्यमपि नामिसूत्रवैयर्थ्यसहितसन्निपातपरिभाषासहकारेण नामीत्येतद्भिन्नस्वनिमित्तसन्निपातविघातकं यत्तदतिरिक्तेन स्वप्रवृत्त्युत्तरप्रवृत्तिमता शास्त्रेण यज्ज्ञाप्यन्तत्साध्वित्याकारकमेव कल्प्यम्। ततश्च रामाणामित्यादौ नुटि नामीति दीर्घस्तु स्यात्। प्ररीणामित्यत्र सन्निपातपरिभाषाविरोधाद्रायो हलीत्यात्वन्न स्यादिति प्ररीणामित्येव साध्विति वोध्यम्। ग्रामणि पुत्र इत्यादावुत्तरपदनिमित्तके ह्रस्वे वहिरङ्गपरिभाषया तुको वारणपरं ङ्मोह्रस्वादचि ङमुण्नित्यमिति सूत्रस्थं भाष्यन्तु एकदेशिन एवेति दिक्।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## २५. लिट् धुगित्यादौ धातुत्वात्पूर्वसूत्रेणाप्राप्तं प्रातिपदिकत्वं कृत्तद्धितेति सूत्रेण कृदन्तत्वात् विधीयते

अत्रेदं विचार्य्यते—क्रियावाचकस्य भ्वादेर्धातुसंज्ञा क्रियते। क्रियावाचकत्वञ्च क्रियानिरूपितशक्तिपर्य्याप्त्यधिकरणत्वम्। किबन्तलिहित्यस्य यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायेनास्वादनक्रियाकर्तृनिरूपितशक्तिमत्त्वेऽप्यास्वादनक्रियानिरूपितशक्तेरपि सत्त्वेन धातुत्वमुपपन्नम्। नन्वेवं यच्छब्दनिष्पन्नयाशब्देऽपि प्रापणक्रियानिरूपितशक्ततावच्छेदकयात्वस्य सत्त्वेन शक्तेरऽपि सत्त्वेन प्रत्युच्चारणं शब्दभेदेन सर्वयाव्यक्तीनां धातुत्वाय भ्वादिगणपठितवृत्त्यानुपूर्व्वीमत्त्वस्यैव भ्वादित्वमित्यस्य वक्तव्यत्वेन भ्वादित्वस्यापि सत्त्वेन च धातुत्वापत्तिरितिचेत्—न। क्रियाविषयकबोधजनकत्वेन तात्पर्य्यविषयत्वस्यैव क्रियावाचकपदार्थत्वेन प्रकृते तदभावेनादोषात्।

न चैवमपि लिट्धुगित्यादावपि क्रियाकर्त्तृतात्पर्य्यकत्वेन क्रियाबोधजनकत्वेन तात्पर्य्यविषयत्वाभावाद्धातुत्वानापत्तिरिति वाच्यं, कर्त्तृविशेषणतया क्रियायामपि तात्पर्य्यसत्त्वेनादोषात्। न च ईधातोः क्विपि ईरिति तस्य आशब्देन समासे येत्यादौ विशेषणतया क्रियाबोधकत्वेन तात्पर्य्यसत्त्वाद्धातुत्वापत्तिरिति क्रियाविशेष्यकबोधजनकत्वेन तात्पर्य्यविषयस्यैव धातुत्वेन कर्तृविशेषणतया क्रियाबोधकक्विबन्तलिडादौ धातुत्वानापत्तिरिति वाच्यम्, क्रियानिरूपितशक्तिविशिष्टत्वस्यैव क्रियावाचकत्वेन विवक्षितत्वात्। वैशिष्ट्यञ्च स्वज्ञानाधीनबोधजनकत्वेन तात्पर्य्यविषयत्वस्वपर्य्याप्त्यधिकरणत्वोभयसम्बन्धेन। लिडित्यादौ आस्वादनक्रियानिरूपितशक्तिविशिष्टाम्बा शक्तिमादाय लक्षणसमन्वयो यतस्तच्छक्तिपर्य्याप्तिर्लिहित्यादौ तज्ज्ञानाधीनाबोधजनकत्वेन तात्पर्य्यविषयत्वमपि तत्र विशिष्टशक्तिग्रहस्यावयवशक्तिग्रहाधीनतया विशिष्टशक्तिज्ञानजन्यबोधस्याप्यवयवशक्तिज्ञानाधीनत्वात्ततः। येत्यादौ तु क्रियानिरूपितं शक्तिद्वयमेकेकारपर्य्याप्ता ततूस्थानिकयकारमात्रपर्य्याप्ता वा अपरा च या पर्य्याप्ता आद्याया याशब्दे पर्याप्तिर्नास्ति द्वितीयाया गमनकर्तृसम्बन्ध्याव्यक्तिबोधजनकज्ञानविषयत्वं नास्तीति न धातुत्वम्। यच्छब्दनिष्पन्नयाशब्दे तु क्रियानिरूपितशक्तेः पर्य्याप्तिसत्त्वेऽपि प्रकृतबोधोपयोगित्वाभावेन न धातुत्वमिति दिक्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# २६. दादेर्धातोर्घः ८।२।३२

शेखरकृता दादिपदस्यौपदेशिकदादित्वविशिष्टे लक्षणा कृता। प्रमाणञ्च तत्र प्रकृतसूत्रस्थं भाष्यं दत्तम्। तथा हि-धुगित्यादौ ढत्वमाशंक्यापवादत्वाद् घत्वमित्युक्त्वा होढोऽदादेरित्येको योगः धातोर्घ इत्यपरो योगः कृतः। पूर्वयोगान्नञ्रहितस्य दादेरित्यस्य धातोरित्युत्तरयोगेऽनुवृत्तिः कृता, दाद्यवयवभिन्नस्य हस्य ढ इति पूर्वस्यार्थः। धुगित्यादौ दाद्यवयवत्वेन ढत्वाप्राप्त्या दादिधात्ववयवस्य हस्य घ इत्यर्थकेनानुवृत्तदादिसहितधातोरित्यपरयोगेन घत्वसिद्धिरितिपक्षान्तरेण समाधानं कृतम्। भाष्यकृता च अत्र दादेरित्यनुवृत्तेर्न्न फलं दाद्यवयवभिन्नहत्वस्य व्याप्यतया तद्धर्म्मावच्छिन्नोद्देश्यताकढत्वेन धात्ववयवहत्वरूपव्यापकधर्म्मावच्छिन्नोद्देश्यताकघत्वस्य बाधादेवादादौ घत्वाप्राप्तेस्तद्व्यर्थं सदौपदेशिकदादित्वविशिष्टस्य लक्षणया बोधकम्। अर्थाधिकारानुरोधाच्च पूर्वत्र होढोऽदादेरिति निषेधसमर्प्पकेऽपि दादिपदमौपदेशिकदादित्ववत्परमेव। तेनौपदेशिकदादित्वविशिष्टावयवभिन्नस्य हस्य ढ इति पूर्वस्यार्थः। तथा च दाम लिडित्यत्रेच्छाक्यजन्तनामधातावौपदेशिकदादित्वाभावेन ढत्वं घत्वाभावश्च सिद्धोऽधोगित्यत्रौपदेशिकदाद्यवयवत्वाद् घत्वं ढत्वाभावश्च सिद्धः दादेरिति वर्त्तत एतदुत्तरमागमसमभिव्याहारे आगमविशिष्टस्यैव धातुत्वात्तस्य च दादित्वाभावादधोगित्यत्र घत्वं न प्राप्नोतीत्याशयेन दादेरित्युच्यते, कथमधोगित्याशङ्क्य धात्ववयवो यो दादिरिति वैयधिकरण्यान्वयेन समाहितं भाष्ये। तत्र सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वाद्वैयधिकरण्यस्यायुक्तत्वशङ्कया गर्द्धवित्याद्यर्थमुत्तरसूत्रे धातोरित्यस्य तथान्वयस्यावश्यकत्वादत्राप्यर्थाधिकारानुरोधात्तथैवान्वय इत्युक्तन्तद्विरुद्ध्येत। दादिपदस्यौपदेशिकदादित्वार्थकत्वेऽधोगित्यत्रापि तत्सत्त्वेन शङ्काया वैयधिकरण्यान्वयरूपसमाधानस्य चानवसरपराहतत्वादिति तु न वाच्यम्, दादिपदस्यौपदेशिकदादित्वार्थकत्वमजानत एकदेशिन उक्तत्वेनाविरोधात्। उत्तरार्थमावश्यकत्वं वैयधिकरण्यान्वयस्य वदता भाष्यकारेणाप्यत्रानावश्यकत्वं ध्वनितम्। तस्माच्च दादिपदस्यौपदेशिकदादित्वार्थकत्वं ध्वनितमिति शेखरग्रन्थार्थः।

अत्रेदं विचार्य्यते। पूर्वं बाध्यबाधकभावमाश्रित्य समाधानं कृतमथ वेत्यादिना। बाध्यबाधकभावमन्तरेणैव सूत्रस्वरूपभेदेन तयोर्व्विषयविभागेन समाधानमुच्यते। ततश्च बाध्यबाधकभावमन्तरा लिडित्यादौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दादिग्रहणेनैव घत्वं वारणीयन्नान्यथेति दादिग्रहणं सार्थकमेव न तु व्यर्थम्। किञ्च पूर्वयोगे निषेध्यसमर्प्पकदादिपदस्यौपदेशिकदादित्वविशिष्टार्थकत्वे दाम लिडित्यादौ नामधातौ होढोऽदादेरित्यस्यैव घत्वं वाधित्वा प्रवृत्त्या धातोरित्यस्याप्रवृत्त्यौपदेशिकदादित्वे लक्षणायामप्युत्तरसूत्रे दादिग्रहणं व्यर्थमेव। एवं दादेरित्यस्यौपदेशिकदादित्वविशिष्टबोधकत्वे धातोरित्यस्य वैयर्थ्यं प्रातिपदिकस्योपदेशाभावात्, प्रत्ययादीनां दादित्वाभावात्तदवयवस्य हस्याभावाच्च। किञ्च दादिपदस्य तदर्थकत्वे घो दादेरित्युच्यते कथमधोगिति भाष्यासङ्गतिरौपदेशिकदादित्वस्याडागमे कृतेऽप्यधोगित्यस्य सत्त्वात्। न च तस्यैकदेशयुक्तत्वं प्रमाणाभावात्, न चोत्तरार्थमावश्यकत्वकथनसूचितादिहानावश्यकत्वादेवैकदेशयुक्तत्वमिति वाच्यम्। न ह्येकत्रावश्यकस्यान्यत्रानावश्यकत्वनियमो वहुषु स्थलेष्वेकस्यावश्यकत्वदर्शनात्। तस्मात् धातोरवयवो यो दादिस्तस्य हस्य घ इत्येवार्थस्तेनाधोगित्यत्र घत्वसिद्धिर्न्नामधातौ दाम लिगित्येव धात्ववयवदादित्वस्य सत्त्वेन घत्वप्रवृत्तेर्हस्य दाद्यवयवत्वेन ढत्वाप्रवृत्तेश्च दाम लिडिति श्रूयमाणं कथमुपपद्यत इति चेद्दामोपपदाल्लिहेः क्विपि वोध्यम्। न च दाद्यवयवत्वान्न ढत्वप्राप्तिरिति वाच्यम्, अर्थाधिकारानुरोधान्निषेध्येऽपि धात्ववयवस्यैव दादेर्ग्रहणेनादोषादुपदेश इत्यर्थस्तु न युक्तः, सूत्रभाष्यवार्त्तिककारैरनुक्तत्वादिति दिक्।

---

## २७. भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्द्देशः

युष्माकमित्यादौ युष्मद् आमिति स्थिते शेषे लोप इत्येनेनान्त्यलोपे कृतेऽदन्तात्परत्वेन सुटः प्राप्तिरन्त्यलोपश्चाकमादेशादुत्तरन्न तु ततः प्राक् तदानीमाम आदेशाभावेन युष्मदस्मदोरनादेश इत्यस्य प्रवृत्त्याऽऽत्वनिमित्तेतरत्वरूपशेषत्वस्यामोऽभावादाकमादेशश्च सुट्प्रवृत्त्यूत्तरन्तदैव साम्त्वसम्पत्तेस्सुट्प्रवृत्तिश्चान्त्यलोपोत्तरमिति चक्रकापत्त्या सामोऽभावात्साम आकमित्यसङ्गतमित्यत आह-भाविन इति। स्थान्यादेशभावस्थले सर्वत्र स्थानिनः प्रसङ्ग एव आदेशो विधीयते न तु सतो निवृत्तिरसतो वोत्पत्तिश्शब्दानित्यत्वप्रसङ्गात्। प्रकृते स्थानिनस्सामोऽस्त्यंशद्वयं सकार आम् च सकारसहितस्यैवामस्सामत्वात् तत्रामः प्रसङ्गस्साम्प्रतिकः सकारप्रसङ्गश्च भावी। सर्वत्र वर्त्तमान एव स्थानिनः प्रसंगे आदेशो भवत्यत्र तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भाविन्यपि सकारप्रसङ्गे आकम् वर्त्तमानस्य सकारप्रसङ्गस्यासम्भवेन सूत्रस्यैव वैयर्थ्यापत्तेः आम एवाकमादेशे स्थानिवद्भावेन प्राप्तस्य सुटोऽभावायैव स्थान्यंशे सकारविशेषणमादेशस्थले स्थानिकोटिप्रविष्टाश्रयणस्य स्वभावसिद्धत्वादित्येव भाविनः सुट् इत्यादेराशयः। मनोरमाकारेण तु आमंशे तन्त्रं स्वीकृत्याम आकमित्येकोऽर्थस्तेनाम्मात्रस्याकमितरस्य स्थानिवद्भावेनाम्त्वात्सुटि सकारसहिताम्रूपसाम्रूपस्य साकमित्यस्य साम आकमिति द्वितीयार्थेनाकमित्याशय उक्तोऽस्य मते अतित्वाकमित्यादौ प्रथमप्रवृत्त्यैव रूपसिद्धिः। शेखरकृता चोक्तरीत्या सकृत्प्रवृत्त्यैवोपपत्तौ तन्त्रेण प्रवृत्त्यन्तरकल्पनं व्यर्थमित्युपेक्षितोऽयं पक्षः। परन्त्वस्मिन् पक्षे साम आकमिति सूत्रतश्शब्दमर्य्यादयाऽऽकमादेशासिद्धिरतित्वाकमित्यादौ भाविनोऽपि सुट्प्रसङ्गस्याभावेनाकमेऽसिद्धिश्चेत्यतः पक्षान्तरं तन्निवृत्तिश्चेत्यादिना शेखरकारेणोच्यते युष्मद् आमिति स्थिते आमि साम्त्वमारोप्याकम् विधीयते कृते चाकमि युष्माकमतित्वाकमित्यादौ स्थानिवद्भावेनाम्त्वमादाय न सुड्नुटौ साम्त्वेन स्थानित्वादाम्त्वस्यातिदेशासम्भवादिदमेवोक्तं स्थानिवद्भावेन साम्त्वमेव न त्वाम्त्वमितिग्रन्थेन। परन्त्विदमनुपपन्नम्। अस्योपपत्तिर्हि तदैव स्याद्यदा स्थानितावच्छेदकस्यैवातिदेश इति नियमः स्यात्तदैव नान्यथा रामायेत्यादौ यादेशे प्रत्ययत्वसुप्त्वादेरतिदेशानापत्तेस्तस्य स्थानितानवच्छेदकत्वात्। ततश्च युष्माकमित्यादौ स्थानिवद्भावेनाम्त्वात्सुट् अतित्वाकमित्यादौ नुट् च दुर्वारौ। तस्मादिदं तत्त्वम्—सामित्यस्य सुड्योग्य आमित्यर्थो मध्यमपदलोपिसमासत्वात्। सुड्योग्यता च सुट्कारणतावच्छेदकधर्म्मवत्त्वमेव। तच्चाकारान्तात्परत्वरूपमाकारान्तात्परस्यामस्सुड्विधानात्। तच्चेदानीन्नास्तीति तदारोप्यते। ततश्च युष्मद् आमिति दशायामेव सुड्योग्य आम स एवाम् तस्यारोपिताकारात्परत्वमादाय प्राप्तौ सुड्नुटौ तक्रन्यायेन बाधित्वाऽऽकमि कृते न सुड्नुटौ भवतस्तक्रन्यायेन बाधकविषये बाध्याप्रवृत्तेरिदं सर्वं ससुट्कनिर्देशादेव कल्प्यत इति नातिप्रसङ्ग इति।

मुमुक्षु भवन वेद वेदांग विद्यालय
ग्रन्थालय
आगत क्रमांक..................
दिनांक..................

---

## २८. स्त्रियाम् ( अधिकारोऽयम् ) ४।१।३

ननु शास्त्रे स्त्रियाम्, तस्माच्छसो नः पुंसि, नपुंसकाच्चेत्यादौ स्त्रीपुन्नपुंसकशब्दानां शक्यतावच्छेदकानि स्त्रीत्वपुंस्त्वनपुंसकत्वानि किंस्वरूपाणि?

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदि स्तनकेशवत्त्वं स्त्रीत्वं, लोमवत्त्वं पुंस्त्वम्, उभयाभाववत्वे सति अंशतस्तदुभयवत्त्वं नपुंसकत्वं, तर्हि खट्वाद्यचेतनबोधकखट्वादिशब्दानामुक्तस्त्रीत्वादिबोधकत्वासम्भवेन खट्वा घटान् दधीत्यादौ टाप् नत्वं सुलुक् न स्यात्। यदि च सत्त्वादिगुणानामुपचयः पुंस्त्वमपचयः स्त्रीत्वं, तेषां स्थितिरूपं नपुंसकत्वम्, साङ्ख्यमते पुरुषातिरिक्तपदार्थमात्रस्य सत्त्वरजस्तमस्स्वरूपप्रकृतिपरिणामरूपतया त्रिगुणात्मकत्वेन सत्त्वादीनाञ्च स्वस्वेतरगुणापेक्षया वृद्धिह्राससाम्यरूपोपचयादीनाञ्च सम्भवेन चेतनाचेतनसकलपदार्थेषु सर्वलिङ्गसद्भावेन दोषाभावोऽत एव पदार्थमात्रे अयं पदार्थः इयं व्यक्तिरिदं वस्त्वित्यादिवाक्यैः सर्वलिङ्गप्रतीतिरित्युच्यते, तथापि पुरुषे ब्राह्मणी, ब्राह्मण्यां ब्राह्मणः ब्राह्मणमित्यादिप्रयोगापत्तिस्सर्वत्र सर्वलिङ्गसत्त्वेन तत्तल्लिङ्गविवक्षया तत्तल्लिङ्गबोधकत्वनिमित्तकतत्तत्कार्य्यप्रवृत्तिसम्भवात्।

अत्रोच्यते—अचेतननिष्ठप्रवृत्तिनिमित्तकशब्दानां सत्त्वादिगुणोपचयादिरूपशास्त्रीयलिङ्गबोधकत्वमेव। चेतननिष्ठप्रवृत्तिनिमित्तकशब्दानां तु शास्त्रीयलिङ्गसहितलौकिकस्तनादिवत्त्वादिरूपलिङ्गबोधकत्वं दारशब्दस्य च शास्त्रीयलिङ्गबोधकत्वमेव। कस्य शब्दस्य किं लिङ्गबोधकत्वमित्यत्र तु कोश एव प्रमाणम्। कस्य चिदेकलिङ्गबोधकत्वं कस्य चिल्लिङ्गद्वयबोधकत्वं कस्य चिल्लिङ्गत्रयबोधकत्वमित्यपि कोशादेवावगन्तव्यम्।

तथा च ब्राह्मणे ब्राह्मणीशब्दवाच्यस्य शास्त्रीयस्त्रीत्वस्य सत्त्वेऽपि लौकिकस्त्रीत्वस्याभावेन, ब्राह्मण्यां ब्राह्मणशब्दवाच्यस्य शास्त्रीयपुंस्त्वस्य सत्त्वेऽपि लौकिकपुंस्त्वस्याभावेन शास्त्रीयलिङ्गसहितलौकिकलिङ्गस्याभावेन न ब्राह्मणे ब्राह्मणीशब्दस्य न वा ब्राह्मण्यां ब्राह्मणशब्दस्य प्रयोगः। ब्राह्मणशब्दस्य नपुंसकत्वलिङ्गबोधकत्वाभावेन लौकिकनपुंसकत्वलिङ्गवत्यपि ब्राह्मणे ब्राह्मणमिति न प्रयोगः। शास्त्रघटकस्त्रीपुन्नपुंसकशब्दानाञ्च शास्त्रीयस्त्रीत्वादिलिङ्गबोधकतयाऽचेतनबोधकशब्देषु शास्त्रीयलिङ्गबोधकेषु शास्त्रीयतत्तल्लिङ्गबोधकत्वनिमित्तकटावादिकार्य्यसिद्धिः। चेतननिष्ठप्रवृत्तिनिमित्तकेषु शब्देषु च शास्त्रीयतत्तल्लिङ्गसहितलौकिकतत्तल्लिङ्गबोधकेषु शास्त्रीयतत्तल्लिङ्गबोधकत्वमादाय शास्त्रीयं कार्य्यमत एव शास्त्रीयलिङ्गविशिष्टलौकिकलिङ्गबोधकत्वस्वीकारः। लौकिकमात्रलिङ्गबोधकत्वे शास्त्रीयलिङ्गबोधकत्वनिमित्तककार्य्याणामभावापत्तेः।

न च लौकिकलिङ्गबोधकत्वनिमित्तकत्वमेव शास्त्रीयकार्य्याणामस्तु चेतनबोधकशब्दे शास्त्रीयलिङ्गबोधकत्वस्य नोपयोग इति वाच्यम्, अचेत-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नबोधकशब्दे शास्त्रीयलिङ्गबोधकत्वनिमित्तककार्य्यानापत्तेः, दारानित्यादौ नत्वानापत्तेश्च। न च शास्त्रघटकस्त्र्यादिशब्दानामुभयलिङ्गबोधकत्वमस्तु चेतनबोधकानां लौकिकलिङ्गबोधकत्वमचेतनबोधकानां शास्त्रीयलिङ्ग-बोधकत्वमादाय शास्त्रीयकार्य्योत्पत्तेः। चेतनबोधकानां शास्त्रीयलिङ्गबोध-कत्वस्मास्त्वननुभवादिति वाच्यं, लिङ्गद्वयेऽनुगतरूपाभावेन तत्तद्धर्म्मा-वच्छिन्ने विभिन्नशक्तेरावश्यकतया सकृदुच्चारितस्त्र्यादिशब्दानामसकृ-दुच्चरितन्यायविरोधादुभयबोधकत्वासम्भवेनावृत्तिकल्पने गौरवात्। न चानन्तचेतनबोधकशब्दानां शास्त्रीयलिङ्गे शक्तिकल्पनापेक्षया शास्त्रघटक-कतिपयस्त्र्यादिशब्दानामावृत्तिकल्पने एव लाघवमिति वाच्यम्, नकारङी-वादिकार्य्याणां चेतनाचेतनबोधकशब्दोत्तराणामनुगतनत्वादिधर्म्माव-च्छिन्नतयाऽनुगतनत्वाद्यवच्छिन्नकार्य्यतानिरूपितकारणतावच्छेदकेनानु-गतधर्म्मेणैव भवितव्यम्। तथा च शास्त्रीयलिङ्गबोधकतात्वावच्छिन्नैव कारणतेति युक्तम्। ततश्च शास्त्रीयलिङ्गबोधकत्वमेव स्त्र्यादिशब्दाना-मितिनिर्णये तत्तत्कार्य्यानुरोधेन चेतनबोधकशब्दानामपि शास्त्रीयलिङ्ग-बोधकत्वमावश्यकमित्यावृत्तौ लाघवमकिञ्चित्करम्। अन्यथाऽनन्तब्रह्मा-ण्डास्वीकारलाघवेन शून्यवादस्यापि प्रामाणिकत्वापत्तेः। अत एव योगजदृष्ट्या सर्वज्ञेनापि भाष्यकारादिना स्त्रियामित्यादावावृत्तिर्न कृता। एवमप्यत्याग्रहश्चेदस्तु स्त्र्यादिशब्दघटितशास्त्राणामावृत्तिश्चेतनबोधक-शब्दानां लौकिकमात्रलिङ्गबोधकत्वमस्तु।

ननु एकस्मिन् पदार्थे युगपत् सत्त्वादिगुणानामुपचयापचययोर-सम्भवेन वह्निर्देवता इन्द्रो देवतेत्यादावेककाले एकपदार्थगतस्त्रीत्वपुंस्त्व-बोधकदेवतावह्निशब्दप्रयोगानुपपत्तिरिति चेत्—न। सत्त्वादिगुणाना-मुपचय इत्यादीनां त्रयाणां गुणानामुपचयादिरितिनार्थोऽपि तु तेषां मध्ये कस्य चिदेवेत्यर्थस्तथा चैकस्योपचयेऽपरस्यापचय इत्यस्य युगपत्सम्भवेनै-कदा लिङ्गद्वयबोधे बाधकाभावात्। अत एवैकस्मिन्नेव समये एकस्मिन्नेव पदार्थे पदार्थ इति व्यक्तिरिति च प्रयुज्यते। चेतनाचेतनोभयबोधकशब्दानां शास्त्रीयलिङ्गबोधकत्वमेवात एव पदार्थव्यक्तिवस्तुशब्दानामुभयत्र प्रयोगः। तत्र प्रत्ययान्तदेवतादिशब्दानामपि शास्त्रीयलिङ्गबोधकत्वमेवात एवेन्द्रो देवतेत्यादयः प्रयोगाः।

न च सत्त्वादीनां गुणत्वात्तत्र महत्परिमाणरूपोपचयापचययोर्ह्रास-वृद्धिरूपयोर्वा तयोरसम्भवो गुणे गुणानङ्गीकारादिति वाच्यं, सत्त्वरज-स्तमसां गुणपदवाच्यत्वेऽपि वैशेषिकमतसिद्धगुणत्वाभावेनादोषात्। न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चात्मनस्सत्त्वादिगुणानात्मकतया तत्र शास्त्रीयलिङ्गासम्भवेन तद्बोधकशब्दानां लिङ्गनिमित्तककार्य्याभावप्रसङ्ग इति वाच्यम्, शुद्धस्याद्वयरूपस्यात्मनः शब्दवाच्यत्वाभावात्। 'यतो वाचो निवर्त्तन्तेऽप्राप्य मनसा सहे'ति श्रुतेरहंकारादिविशिष्टस्य तस्य शब्दवाच्यत्वं नानुपपन्नमहंकारस्य त्रैगुण्यात्, शास्त्रीयलिङ्गस्य तत्राबाधात्। न च तथाऽप्यात्मनि शुद्धेऽभावात्तस्य केवलान्वयित्वमसङ्गतमिति वाच्यम्, अहंकारादिगतस्य तस्य तत्राध्यस्तत्त्वमात्रेण तदुक्तेस्सत्वात्।

---

## २९. प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २।३।४६

प्रातिपदिकार्थश्च लिङ्गञ्च परिमाणञ्च वचनञ्च प्रातिपदिकार्थलिङ्गपरिमाणवचनानि, तान्येव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रं, तस्मिन्। द्वन्द्वघटकसर्वपदार्थानां प्राधान्यात् द्वन्द्वसमभिव्याहृतपदार्थस्य सर्वेषु द्वन्द्वघटकपदार्थेष्वन्वये बाधकाभावेन मात्राशब्दार्थस्य सर्वत्रान्वयः। अन्ययोगव्यवच्छेदश्च मात्रशब्दार्थस्तद्घटकभेदे च प्रतियोगितया पूर्वोच्चरितपदार्थस्य प्रातिपदिकार्थादेरन्वयः। योगस्सम्बन्धः। स च मात्रशब्दपूर्वशब्दार्थो येन सम्बन्धेनान्वयित्वेन विवक्षितस्स एव प्रकृते तथाभूतप्रातिपदिकार्थादेर्बोधकत्वसम्बन्धेन प्रातिपदिकेऽन्वयात्स एव सम्बन्धः व्यवच्छेदोऽभावस्तस्य च यस्मिन् समभिव्याहृतपदार्थस्यान्वयस्तस्मिन्नेवान्वयस्स्वरूपसम्बन्धेन प्रकृते च प्रातिपदिकेऽन्वयः। तथा च प्रातिपदिकार्थबोधकं यत् प्रातिपदिकार्थप्रतियोगिकभेदविशिष्टप्रतियोगिकबोधकत्वसम्बन्धाभावविशिष्टं प्रातिपदिकन्तस्मात्।

लिङ्गबोधकं यल्लिङ्गेतराबोधकं वचनबोधकं यद्वचनेतराबोधकं प्रातिपदिकन्तस्मात्प्रथमेत्यर्थः।

परिमाणेत्यस्य तु परिमाणमात्रबोधकात् प्रातिपदिकात् प्रथमेत्यर्थः। आद्योदाहरणमुच्चैरादव्ययं नियतलिङ्गघटादयश्च। ते हि प्रातिपदिकार्थमात्रबोधकाः लिङ्गग्रहणस्यानियतलिङ्गास्तटादिशब्दा उदाहरणम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु पञ्चकं* प्रातिपदिकार्थ इति वैयाकरणसिद्धान्ताल्लिङ्गस्यापि प्रातिपदिकार्थत्वेन तटादिशब्देऽपि प्रातिपदिकार्थ इत्येव प्रथमासिद्धे-र्लिङ्गग्रहणं व्यर्थमिति चेत्-न। नियतोपस्थितिकस्यैवार्थस्य प्रातिपदिकार्थ-पदेन ग्रहणात्। अनियतलिङ्गस्थले कदाचित्पुंस्त्वस्य कदाचित्स्त्रीत्वादेर्भानेन नियमेन कस्यापि लिङ्गस्य भानाभावेनाप्रातिपदिकार्थत्वात्। प्रातिपदिका-र्थेतरलिङ्गबोधकत्वेन प्रातिपदिकार्थ इत्यनेनासिद्धेः।

ननु लिङ्ग इत्यनेनापि तटादिशब्दे प्रथमा न स्यात् लिङ्गेतरतटादिबो-धकत्वेन लिङ्गमात्रबोधकत्वाभावादिति चेत्—न, केवललिङ्गबोधकस्त्रीपुन्न-पुंसकशब्देभ्यः नियतलिङ्गबोधकेभ्यश्च प्रातिपदिकार्थमात्रबोधकत्वेन प्रातिपदिकार्थ इत्येव सिद्धे लिङ्गग्रहणसामर्थ्यात् लिङ्गवाक्ये मात्रपदेन प्रातिपदिकार्थेतरस्यैव व्यावृत्तिस्वीकारेण लिङ्गेतरो यः प्रातिपदिकार्थेतर-स्तदबोधकात् लिङ्गबोधकादित्यर्थेनादोषात्। प्रातिपदिकार्थापेक्षया लिङ्ग-मात्रं यत्राधिकं भासते तत्र लिङ्गमात्रे प्रथमेति निष्कर्षः। तत्फलितमेव लिङ्गमात्राद्याधिक्य इत्युक्तं मूले।

अथ नियतोपस्थितिक इत्यस्य कोऽर्थः? उच्यते—निपूर्वकयम्धातो-र्व्यापकत्वमर्थः। क्तप्रत्ययार्थ आश्रयस्तथा च व्यापकत्वाश्रयो व्यापिको-पस्थितिर्य्यस्य स नियतोपस्थितिकः। व्यापकत्वस्य व्याप्यनिरूपितत्वेन यत्किञ्चिन्निरूपितव्यापकत्वस्याव्यभिचरितत्वाच्च। किन्निरूपितव्यापक-त्वमिति जिज्ञासायां शेखरे उक्तं यस्मिन्नुच्चारिते प्रातिपदिके यस्यार्थस्य नियमेनोपस्थितिस्स नियतोपस्थितिक इति। तथा च यदुच्चारितप्रातिपदि-कनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिविषयो योऽर्थस्स तत्प्राति-पदिकार्थस्तन्मात्रबोधकात्तत्प्रातिपदिकात्प्रथमेति पर्य्यवसितोऽर्थः। तथा सति यत्तच्छब्दार्थयोरननुगतत्वेन यत्किञ्चिदेकशब्दविषकत्वापत्तौ शास्त्रस्य सर्वलक्ष्यविषकत्वानुपपत्तिर्य्यत्तच्छब्दार्थयोरप्रवेशे सर्वस्यैवार्थस्य यत्कि-ञ्चित्प्रातिपदिकार्थत्वस्य सत्त्वेनातिप्रसंगात् प्रातिपदिकविशिष्टात्प्रातिपदि-कात्प्रथमेति वक्तव्यम्। वैशिष्ट्यञ्च-स्वव्यापकोपस्थितिविषयीभूतार्थबो-धकत्वस्वव्यापकोपस्थितिविषयीभूतार्थेतराबोधकत्वस्वतादात्म्यैतत्त्रितय-सम्बन्धेन। घटेत्यादिनियतलिङ्गेऽलिङ्गाव्ययादौ च घटत्वादीनां पुंस्त्वादि-

---

*प्रवृत्तिनिमित्तं व्यक्तिश्चेति द्विकं, प्रवृत्तिनिमित्तं व्यक्तिः लिङ्गं संख्या चेति चतुष्कं, प्रवृत्तिनिमित्तं व्यक्तिः लिङ्गं संख्या कारकञ्चेति पञ्चकं प्रातिपदिकार्थः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लिङ्गानामव्ययार्थस्य चोपस्थितीनां घटादिप्रातिपदिकं प्रति व्यापकत्वात्तत्प्रातिपदिकात् प्रथमा। घटादिशब्दे उच्चारिते अव्यये चोच्चारिते सर्वदैव हि घटघटत्वपुंस्त्वादीनामव्ययार्थस्य चोपस्थितेस्सत्त्वेन तस्याव्यापकत्वात्। न च प्रातिपदिकव्यापकत्वमुपस्थितेर्दुर्घटम्। प्रातिपदिकस्याकाशमधिकरणमुपस्थितेश्चात्मेति सामानाधिकरण्यस्यैवाभावादिति वाच्यं, समवायेनाकाशाधिकरणकत्वेऽपि स्वविषयकश्रावणप्रत्यक्षसमवायित्वसम्बन्धेनात्मन्येव प्रातिपदिकस्यापि सत्त्वेन व्यापकत्वोपपत्तेः।

ननु शक्तिग्रहाभाववति श्रावणप्रत्यक्षसमवायित्वसम्बन्धेन प्रातिपदिकाधिकरणेऽप्यात्मन्युपस्थितेरभावेनाव्यापकत्वमेवेति चेत्-न। स्वनिष्ठशक्तिग्रहाहितोद्बुद्धसंस्कारसमवायित्वस्वश्रावणप्रत्यक्षसमवायित्वोभयसम्बन्धेन प्रातिपदिकाधिकरणत्वस्य स्वाधिकरणनिष्ठाभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वरूपव्यापकत्वकुक्षौ प्रवेशेन निरुक्तात्मन्युक्तसम्बन्धद्वयेन प्रातिपदिकस्याप्यभावेन व्यभिचाराप्रसङ्गात्।

नन्वेवमपि नियतलिङ्ग इवानियतलिङ्गतटादिशब्देऽप्युक्तोभयसम्बन्धेन सति लिङ्गत्रयोपस्थितेरपि नियमेन सद्भावात्तत्रापि लिङ्गस्य प्रातिपदिकार्थत्वमेवोपस्थितिकारणस्योद्बुद्धसंस्कारस्य शब्दरूपसम्बन्धिज्ञानस्य च तत्र सत्त्वादिति चेत्-न। उपस्थितिपदस्य तत्र शाब्दबोधपरत्वात्पुंस्त्वादिबोधस्य च विसर्गाम्ङीप्समभिव्याहारनियततया ङीप्समभिव्याहृततटशब्दश्रवणे पुंस्त्वनपुंसकत्वबोधयोरम्समभिव्याहृततटशब्दश्रवणे नपुंसकत्वेतरलिङ्गबोधयोर्विसर्गसमभिव्याहृततटशब्दश्रवणे पुंस्त्वेतरलिङ्गबोधयोरभावेनानियतलिङ्गस्थले लिङ्गबोधस्याव्यापकत्वेनादोषात्। नियतलिङ्गघटादिशब्दश्रवणे तु घटत्वादिबोधवल्लिङ्गबोधस्यापि सर्वत्र सत्त्वेन व्यापकत्वात्ततः। यद्यपि योग्यताकाङ्क्षातात्पर्यज्ञानविभिन्न-(समान?)विषयकप्रत्यक्षसामग्रीविरहाद्यन्यतमस्यापि कारणस्याभावे उक्तोभयसम्बन्धेन विद्यमानेऽपि घटादौ प्रातिपदिके घटादिबोधस्याभावेनाव्यापकतया घटादेरपि प्रातिपदिकार्थत्वानापत्तिस्तथापि स्वजन्यशाब्दबोधसामग्रीसमवायित्वसम्बन्धेन प्रातिपदिकाधिकरणत्वस्य निवेशेनादोषात्तेन सम्बन्धेन प्रातिपदिकसत्त्वे पुंस्त्वविशिष्टघटबोधस्यावश्यंभावेन व्यापकत्वात्ततः। अनियतलिङ्गस्थले च तत्तल्लिङ्गबोधजनिकाः तत्तत्समभिव्याहारघटिताः भिन्ना एव सामग्र्यस्ततश्च तटशब्दश्रवणे स्वजन्यो यदि पुंस्त्वावगाही बोधस्तर्हि तज्जनिका सामग्री विसर्गसमभिव्याहारघटितैव। सा यत्रात्मनि वर्त्तते तत्र पुंस्त्वविषयकबोधसत्त्वे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽपि लिङ्गान्तरविषयकबोधाभावः। एवं स्वजन्यस्त्रीत्वावगाही यदि बोधस्तर्हि तज्जनिका ङीप्समभिव्याहारघटितैव। एवमन्यत्रान्या। तद्वत्यात्मनि पुंस्त्वबोधाभाव इति न कस्यापि लिङ्गबोधस्य व्यापकत्वमित्यनियतलिङ्गस्थले लिङ्गस्याप्रातिपदिकार्थत्वोपपत्तिः।

नन्वेवमपि तटशब्दो निरुक्तसम्बन्धेन यत्र वर्तते तत्र सर्वत्र तटविषयकबोधोऽस्त्येव न तु तदभावस्तथा च तद्बोधस्य तटशब्दव्यापकत्वमस्ति। तद्विषयत्वं तटत्वादेरिव तटगतलिङ्गस्याप्यस्तीति लिङ्गस्य प्रातिपदिकार्थत्वन्तत्रापि दुर्वारम्। किञ्च तादृशाधिकरणे बोधो नास्ति प्रमेयो नास्तीति प्रतीतिविषयाभावस्यासत्त्वात्स्वाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकं बोधत्वं प्रमेयत्वादि च तद्धर्म्मवत्त्वेनापि लिङ्गबोधस्य व्यापकत्वाल्लिङ्गस्य प्रातिपदिकार्थत्वमेवेति चेत्—अत्रोच्यते—स्वाधिकरणवृत्त्यभावीयप्रतियोगितानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभाववती या विषयता तदाश्रयीभूतार्थबोधकत्वमेव सम्बन्धस्तथा च तटाधिकरणे निरूपकत्वसम्बन्धेन पुंस्त्वादिविषयताविशिष्टबोधाभावस्य सत्त्वेन पुंस्त्वादिनिष्ठविषयतायास्तादृशावच्छेदकत्वस्यैव सत्त्वेनानवच्छेदकविषयताघटितसम्बन्धाभावेन दोषाभावात्। लिङ्गबोधे बोधत्वप्रमेयत्वादिना व्यापकत्वस्याकिञ्चित्करत्वात्। नियतलिङ्गस्थले च घटत्वादिविषयताया लिङ्गविषयतायाश्च घटाद्यधिकरणवृत्त्यभावप्रतियोगितावच्छेदकताविरहेणादोषः। स्वाधिकरणवृत्तिता चाभावे स्वरूपसम्बन्धावच्छिन्ना ग्राह्या। तेनाकाशादिनिष्ठबोधाभावस्य कालिकेन घटपटाधिकरणे आत्मनि सत्त्वेऽपि न क्षतिः, नित्येषु कालिकत्वायोगाच्च। अभावश्च समवायसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः। तेन संयोगादिव्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकबोधाभावमादायापि न दोषः। न च स्त्रीत्वनिष्ठविषयतानिरूपितत्वावच्छिन्ना या तटनिष्ठविषयतानिष्ठा निरूपकत्वसम्बन्धावच्छिन्नावच्छेदकता तन्निरूपितावच्छेद्यतावती या बोधनिष्ठा प्रतियोगिता तन्निरूपकस्त्रीत्वनिष्ठविषयतानिरूपिततटनिष्ठविषयताविशिष्टो बोधो नास्तीति प्रतीतिविषयीभूताऽभावः स्वजन्यबोधजनकविसर्गसमभिव्याहारज्ञानघटितसामग्रीसमवायित्वसम्बन्धेन तटाधिकरणे आत्मनि वर्त्तते। तमादाय तटादिविषयताऽपि तादृशावच्छेदकतावत्येवेति न तटादेरपि प्रातिपदिकार्थत्वमिति वाच्यम्, उभयावृत्तिधर्म्मावच्छिन्नावच्छेदकत्वाभावस्यैव निवेशनीयतयाऽन्यादृशावच्छेदकतायास्सत्त्वेऽप्यदोषात्। न च हर्य्यादिनानार्थकशब्दे कस्यापि वासुदेवत्वादिप्रवृत्तिनिमि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्तस्य तदाश्रयस्य वा प्रातिपदिकार्थत्वं न स्यात्। तत्रार्थभेदेन बोधसामग्र्या अपि भिन्नतया वासुदेवत्वावच्छिन्नबोधजनकसामग्रीसमवायित्वसम्बन्धेन हर्य्याद्यधिकरणे आत्मनीन्द्रत्वावच्छिन्नबोधाभावस्येन्द्रत्वावच्छिन्नबोधजनकसामग्रीसमवायित्वसम्बन्धेन च हर्य्यधिकरणे वासुदेवत्वावच्छिन्नबोधाभावस्य च सत्त्वेन वासुदेवत्वेन्द्रत्वादिविषयतायामभावप्रतियोगितावच्छेदकताया एव सत्त्वादिति वाच्यं, प्रातिपदिकनिष्ठशक्तिविशिष्टात्प्रातिपदिकादित्यर्थेनादोषात्। वैशिष्ट्यं-स्वाश्रयत्वनिरुक्तसम्बन्धेन स्वाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकविषयताश्रयार्थबोधकत्वताहशार्थेतरार्थाबोधकत्वैतत्त्रितयसम्बन्धेन। यदर्थतात्पर्य्यकहर्य्यादिपदे प्रथमा कर्त्तव्या तदर्थशक्तिवैशिष्ट्यमादाय सूत्रार्थसमन्वयः। तथा सत्यन्यत्रान्यबोधाभावोऽकिञ्चित्करः। इतरार्थाबोधकत्वमित्यस्येतरार्थबोधजनकत्वेन तात्पर्य्यविषयत्वाभाववत्त्वमर्थस्तेनान्यार्थबोधकत्वस्य नानार्थके सत्त्वेऽपि न दोषः। अथ तच्छब्दे शक्तेरैक्याच्छक्तिवैशिष्ट्यमादायाप्यनिस्तारः। तत्र तत्तदर्थबोधकसामग्र्या भिन्नत्वेन स्वजन्यशाब्दबोधजनकसामग्रीसमवायित्वसम्बन्धेन तच्छक्त्यधिकरणेऽप्यात्मनि यदर्थबोधकसामग्री नास्ति तदर्थबोधाभावप्रतियोगितावच्छेदकत्वस्यैव तत्तदर्थविषयतायाः सत्त्वात्। न च शक्तिज्ञानवैशिष्ट्यनिवेशाददोषः। तथा हि प्रादिपदिकनिष्ठशक्तिज्ञानविशिष्टात्प्रातिपदिकादित्यर्थः। वैशिष्ट्यञ्च स्वविषयशक्त्याश्रयत्वसम्बन्धसहितपूर्वोक्तसम्बन्धद्वयेन। घटस्तत्पदशक्यः पटस्तत्पदशक्य इत्याद्याकारकं भिन्नमेव घटपटादिबोधजनकं तत्पदशक्तिज्ञानं यदर्थतात्पर्य्यकतच्छब्दात्प्रथमा कर्तव्या तदर्थबोधजनकशक्तिज्ञानवैशिष्ट्यमादाय सूत्रार्थसमन्वयः कर्त्तव्यः। घटस्तत्पदशक्यः पटस्तत्पदशक्य इति समूहालम्बनज्ञानमादाय दोषो नोद्भाव्यः। कस्यापि ज्ञानस्य वैशिष्ट्यसत्त्वे इष्टसिद्धेरिति वाच्यम्। घटस्तत्पदशक्य इतिशक्तिज्ञानाद्यत्र पटादिनिष्ठशक्तिज्ञानादिघटितसामग्रीसम्मेलनाद्घटपटविषयकस्समूहालम्बनशाब्दबोधस्तज्जनकसामग्री पटनिष्ठशक्तिज्ञानादिघटितसामग्री तत्समवायित्वसम्बन्धेन घटस्तत्पदशक्य इति ज्ञानं केवलपटविषयकबोधजनकसामग्रीसमवायिनि घटस्तत्पदशक्य इति ग्रहासमवायिन्यात्मनि वर्त्तते तत्र घटनिष्ठविषयताविशिष्टबोधाभावस्य सत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्यैव घटविषयतायां सत्त्वेन दोषात्।

अत्रोच्यते—प्रातिपदिकविशिष्टविषयतावत्त्वं प्रातिपदिकार्थत्वम्। वैशिष्ट्यं च स्वप्रयोज्यत्वस्वविशिष्टविषयताविशिष्टत्वोभयसम्बन्धेन। तत्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैशिष्ट्यं—स्वप्रयोज्यधर्म्मितानिरूपितत्वस्वाप्रयोज्यसंसर्गतानिरूपितत्व-स्वजन्यबोधनिष्ठभेदप्रतियोगितानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नाव-च्छेदकतावत्त्वैतत्त्रितयसम्बन्धेन। द्वितीयवैशिष्ट्यं च स्वभिन्नत्वस्वनिरू-पितावच्छेदकताख्यविषयताभिन्नत्वोभयसम्बन्धेन। समन्वयो यथा नियत-लिङ्गस्थले अनियतलिङ्गस्थले वा प्रवृत्तिनिमित्तावच्छिन्ने खण्डशक्त्योप-स्थितलिङ्गादीनामाकाङ्क्षाभास्यसंसर्गेणान्वयात् लिङ्गनिष्ठा विषयता स्वप्रयोज्यधर्म्मितानिरूपिता स्वाप्रयोज्यसंसर्गतानिरूपिता च भवति। न तु प्रवृत्तिनिमित्तनिष्ठा नापि तदाश्रयनिष्ठा परन्तु नियतलिङ्गस्थले एकस्यैव लिङ्गस्य स्वजन्यबोधे सर्वदैव भानात्स्वजन्यबोधनिष्ठभेदप्रति-योगितावच्छेदकत्वं लिङ्गनिष्ठविषयतायामपि नास्ति। नानार्थस्थले तच्छ-ब्दस्थले च तृतीयसम्बन्धस्य लिङ्गेतरनिष्ठविषयतायां सत्त्वेऽप्याद्यसम्ब-न्धद्वयं नास्ति। राजविशिष्टपुरुषादितात्पर्य्यकतच्छब्दस्थले राजादिनिष्ठ-विषयतायामाद्यन्तसम्बन्धयोस्सत्त्वेऽपि मध्यमो नास्तीति सर्वासु तासु स्वविशिष्टविषयतात्वं नास्तीत्यतोऽन्तिमसम्बन्धद्वयेन स्वविशिष्टविष-यताविशिष्टत्वं स्वप्रयोज्यत्वञ्चास्तीत्यतस्तद्विषयतावतां सर्वेषां प्रातिपदि-कार्थत्वोपपत्तिः। अनियतलिङ्गस्थले च स्वजन्यलिङ्गान्तरविषयकबोधमा-दाय तृतीयसम्बन्धस्यापि सत्त्वाल्लिङ्गनिष्ठा विषयता स्वविशिष्टैवास्ति, न तु स्वविशिष्टविषयताविशिष्टेति। न तत्र लिङ्गं प्रातिपदिकार्थः। तत्र लिङ्गवृत्तिपुंस्त्वत्वादिविषयतायामन्तिमसम्बन्धसत्त्वेऽप्याद्यसम्बन्धद्व-याभावेन स्वविशिष्टविषयतातो भिन्नत्वात्तदाश्रयस्य लिङ्गत्वव्याप्यधर्म्मस्य प्रातिपदिकार्थत्ववारणायान्तिमवैशिष्ट्ये द्वितीयः सम्बन्धः। यदि च तस्य प्रातिपदिकार्थत्वेऽपि न क्षतिरिति विभाव्यते तदा न देयः नियतलिङ्गस्थले स्वविशिष्टविषयताया अप्रसिद्ध्या तद्घटितसम्बन्धाप्रसिद्धिरिति चेत्त-त्सम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वमेव सम्बन्धो बोध्यः।

नन्वेवमदुहितरामित्यादौ हल इति दीर्घवारणाय तद्भावितपक्षाश्रय-णेन संप्रसारणपदप्रयोज्यविधेयताश्रयत्वविशिष्टे यणूस्थानिकेक्त्वावच्छिन्ने संप्रसारणपदशक्यत्वं वक्तव्यमिक्यण इत्येतद्बोधात् प्राक्काले च वसो-स्सम्प्रसारणमित्यादिवाक्यार्थाभावेन विशिष्टस्याप्रसिद्धितया यणूस्थानि-केक्त्वावच्छिन्ने संप्रसारणपदे विधेयताश्रये खण्डशक्तिस्वीकारेण सम्प्र-सारणपदप्रयोज्यविधेयताश्रयत्वांशमोषेण वसोस्सम्प्रसारणमित्यादौ यण्-स्थानिकेक्मात्रस्य बोधात् तत्रत्यसम्प्रसारणपदजन्यबोधनिष्ठभेदप्रतियो-गितावच्छेदकत्वस्यैव सम्प्रसारणपदनिष्ठविषयतायां सत्त्वेनोक्तसम्बन्धद्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्य च सत्त्वेन स्वविशिष्टत्वमेव, न तु स्वविशिष्टविषयताविशिष्टत्वमिति तदाश्रयादेः प्रातिपदिकार्थत्वानापत्तिरिति चेत्-न। संप्रसारणविधौ तदंशस्याभावेन तस्याप्रातिपदिकार्थत्वेऽपि प्रातिपदिकार्थमात्रबोधकत्वेन प्रथमोपपत्तेः। संप्रसारणोद्देश्यकविधावप्रातिपदिकार्थस्य तदंशस्य भानेऽपि तत्र प्रथमेतरविभक्तेरेव सत्त्वेनापत्त्यभावाच्च। न चोवाचेतिपदे संप्रसारणमस्तीति वाक्यघटकसंप्रसारणपदेन यण्स्थानिकत्वविशिष्टसंप्रसारणपदप्रयोज्यविधेयताश्रयस्य भानात् प्रातिपदिकार्थमात्रबोधकत्वाभावेन प्रथमा न स्यादिति वाच्यम्। तत्र यण्स्थानिकेक्त्वावच्छिन्नमात्रस्यैव भानेन प्रातिपदिकार्थमात्रबोधकत्वेन प्रथमोपपत्तेः। सम्प्रसारणपदांशस्याभानेऽपि क्षतिविरहाच्च।

नन्वेवमप्यदुहितरामित्यादौ संप्रसारणं नास्तीत्यादौ तद्वाक्यस्य प्रामाण्योपपत्तये संप्रसारणपदाद्यंशभानस्यावश्यकत्वेन प्रातिपदिकार्थमात्रबोधकत्वाभावेन प्रथमानुपपत्तिर्वज्रलेपायत इति चेत्-अत्रोच्यते-यण्स्थानिकेक्त्वावच्छिन्नमात्रबोधे प्रथमोपपत्त्यनन्तरमभावप्रतीतेर्बाधप्रतिसंधानानन्तरं संप्रसारणपदाद्यंशभानेऽपि प्रथमाया अनिवृत्तेरापत्त्यभावः। सिंहो माणवक इत्यादौ सिंहमात्रबोधेन प्रथमोत्पत्तौ माणवकेऽन्वयबाधप्रतिसन्धानानन्तरं लक्षणया सदृशरूपार्थस्यानियतोपस्थितिकार्थस्य भानेऽपि प्रथमाया अनिवृत्तिवत्, तत्र लक्षणया बोधोऽत्र शक्त्यैव संप्रसारणाद्यंशस्यापि भानमित्यन्यदेतत्।

नन्वेवमपि प्रमेय इत्यादौ प्रथमानुपपत्तिः सर्वेषां प्रमेयपदप्रातिपदिकार्थत्वेन तदितरस्याप्रसिद्धेरिति चेत्—अत्रोच्यते—प्रातिपदिकविशिष्टात् प्रातिपदिकादित्यर्थः। तत्र वैशिष्ट्यं स्वविशिष्टविषयताप्रयोजकत्वस्वविशिष्टविषयताभिन्नविषयत्वाप्रयोजकत्वोभयसम्बन्धेन। विषयतायां वैशिष्ट्यं तु पूर्वोक्तमेव प्रमेयपदविशिष्टा च विषयता प्रमेयपदप्रयोज्यैव सा च प्रमेयत्वावच्छिन्ना प्रमेयत्वत्वावच्छिन्ना च भविष्यति, न तु घटत्वाद्यवच्छिन्ना घटत्वादिनिष्ठा वा प्रमेयत्वानवच्छिन्ना किन्तु तत्र स्वविशिष्टविषयताभिन्नत्वमेव तदप्रयोजकत्वञ्च प्रमेयशब्द इति सर्वं सुप्रसिद्धमिति।

ननु मात्रग्रहणम्मास्तु प्रातिपदिकाच्चेत्प्रथमा तर्हि प्रातिपदिकार्थ एवेति नियमेनैव प्रातिपदिकार्थेतरकर्म्मत्वादिबोधे प्रथमाया अप्रवृत्तेरिति चेत्-न। कर्मणि द्वितीयेत्यस्य यथा कर्मण्येव न तु कर्म्मत्वाभाव इति नियमोऽत एव गान्दोग्धीत्यादावपादानत्वबोधेऽपि द्वितीया तथा प्रातिपदिकार्थे एव न तु प्रातिपदिकार्थाभाव इति नियमस्यैव सत्त्वेनानर्थकनिपा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्य कृत्तद्धितसमासाश्चेति चकारबलेन प्रातिपदिकत्वेऽपि प्रातिपदिकार्थाभावेन प्रथमानापत्तेः। मात्रग्रहणे तु प्रातिपदिकार्थमात्रे एवेत्यर्थे प्रातिपदिकार्थेतरकर्म्मत्वाद्यबोधकादेवेत्यस्य लाभेन संय्योगवद्धिप्रयोगन्यायेन कर्म्मत्वबोधकत्वयोग्यादित्यस्यापि लाभस्तथा चावध्यवधिमतोस्साजात्यनियमेन कर्म्मत्वबोधकत्वयोग्यात्प्रातिपदिकाच्चेत् कर्म्मत्वाद्यबोधकात् कर्म्मत्वबोधकत्वयोग्यादेवेत्यर्थस्यैव पर्यवसितत्वेनानर्थकनिपातस्य नियमानाक्रान्ततया स्वादिसूत्रेण प्रथमासिद्धिरिति स्पष्टं शब्देन्दुशेखरे।

नवीनैस्तु प्रवृत्तिनिमित्तं तदाश्रयश्च प्रादिपदिकार्थः। तदुदाहरणमव्ययपुन्नपुंसकस्त्रीशब्दा एव घटादयस्तटादयश्च नियतानियतलिङ्गाः लिङ्गाधिक्य इत्यस्योदाहरणम्। तत्र लिङ्गस्याप्रातिपदिकार्थत्वात् द्रोणः कुडवमित्यादयश्च परिमाणग्रहणस्योदाहरणम्। तत्र द्रोणत्वादिकं प्रवृत्तिनिमित्तम्। लिङ्गवत्तदवच्छिन्नेऽभेदेन परिमाणत्वेन परिमाणमपि भासते। तच्च न प्रातिपदिकार्थ इति परिमाणाधिक्ये प्रथमा। परिमाणबोधिका प्रथमेति प्राचीनोक्तन्तु न युक्तं, तिङ्समानाधिकरणे प्रथमेति वार्त्तिकविरोधात्, द्रोणो व्रीहिमानयेत्यस्यापत्तेश्च। द्रोणो व्रीहिरिति तु सिंहो माणवक इतिवत् परिमिते लक्षणया बोध्यम्।

ननु किन्नाम प्रवृत्तिनिमित्तम्? न वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वं, घट इत्यादौ पुंस्त्वत्वादेरपि प्रवृत्तिनिमित्तत्वापत्तेः स्वमते लिङ्गस्यापि वाच्यत्वात् अपि तु स्ववाच्यत्वस्ववाच्यवृत्तिविशेष्यतानिरूपितोपस्थितीयप्रकारताश्रयत्वस्वप्रयोज्यधर्म्मितानिरूपितप्रकारतानवच्छेदकत्वैतत्त्रितयसंबन्धेन। स्वविशिष्टत्वं स्वप्रवृत्तिनिमित्तत्वम्। खण्डशक्त्या स्वातन्त्र्येण लिङ्गसंख्याकारकाणां प्रातिपदिकादुपस्थितानां घटत्वाद्यवच्छिन्नेऽन्वयात्तेषु स्वप्रयोज्यघटत्वाद्यवच्छिन्नधर्म्मितानिरूपिता या प्रकारता तदवच्छेदकत्वमेव पुंस्त्वत्वादावविति तेषां व्युदासः। लिङ्गादीनां घटादीनाञ्चोपस्थितीयप्रकारताविरहान्न प्रवृत्तिनिमित्तत्वं घटो द्रव्यपदवाच्य इति घटत्वाद्युपलक्षितशक्तिज्ञानाधीनद्रव्यपदजन्योपस्थितीयप्रकारताश्रये घटत्वादौ द्रव्यपदप्रवृत्तिनिमित्तत्ववारणाय स्ववाच्यत्वेति।

नन्वेवं स्वस्वामिभावसम्बन्धेन राजविशिष्टपुरुषबोधकस्य तत्पदस्य प्रवृत्तिनिमित्तत्वं राजत्वे न स्यात् पुरुषत्वावच्छिन्नधर्म्मितानिरूपितराजनिष्ठप्रकारतावच्छेदकत्वस्यैव तस्मिन् सत्त्वादिति राजत्वतदाश्रययोः प्रातिपदिकार्थत्वाभावेन तदाधिक्यात् प्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वा प्रथमा न स्यादिति चेत्-न। धर्म्मितावघटितसम्बन्धस्थाने स्वविशिष्ट-प्रकारतानवच्छेदकत्वस्य निवेशात्। वैशिष्ट्यञ्च स्वप्रयोज्यधर्म्मितानि-रूपितत्वस्वनिष्ठवृत्तिज्ञानाधीनोपस्थितीयसंसर्गत्वाप्रयोज्यसंसर्गतानिरूपि-तत्वोभयसम्बन्धेन। प्रकृते राजपुरुषयोर्य्यस्सम्बन्धः स्वस्वामिभावात्मक-स्तत्र तत्पदनिष्ठशक्तिज्ञानाधीनोपस्थितीयसंसर्गतायास्सत्त्वेन तत्प्रयोज्यैव संसर्गतेति तन्निरूपितप्रकारत्वावच्छेदकत्वेऽपि राजत्वे दोषाभावात्। लिङ्गघटयोर्य्यस्सम्बन्धस्स घटपदशक्यो नास्तीति तन्निष्ठसंसर्गता घटप-दनिष्ठवृत्तिज्ञानाधीनोपस्थितीयसंसर्गत्वाप्रयोज्यैवाकाङ्क्षाप्रयोज्या तन्नि-रूपितलिङ्गनिष्ठप्रकारतावच्छेदकत्वात्। पुंस्त्वत्वादौ न घटपदप्रवृत्तिनि-मित्ततेति बोध्यम्।

नन्वेवशब्दे अन्ययोगव्यवच्छेदाप्रसिद्धयाऽन्ययोगव्यवच्छेदत्वाव-च्छिन्ने शक्त्यसम्भवादन्ययोगे व्यवच्छेदे च खण्डशः शक्त्याऽन्ययो-गप्रतियोगिकव्यवच्छेदत्वावच्छिन्नधर्म्मितानिरूपकसम्बन्धस्याकाङ्क्षा-भास्यतया तन्निष्ठा संसर्गता एवनिष्ठवृत्तिज्ञानाधीनोपस्थितीयसंसर्गत्वा-प्रयोज्या तन्निरूपितप्रकारतावच्छेदकत्वमेवान्ययोगत्वस्येति तस्य प्राति-पदिकार्थत्वानापत्त्या तदाधिक्यादेव शब्दात् प्रथमा न स्यादिति चेत्— अत्रोच्यते—एवशब्दादुपस्थितस्यान्ययोगमात्रस्य व्यवच्छेदे अन्वये पुन-रन्ययोगव्यवच्छेदाप्रसिद्धिरेव। अतः पार्थ एव धनुर्द्धर इत्यादावेवशब्दार्थे-ऽन्यत्वे प्रतियोगित्वसम्बन्धेन पार्थादिपदार्थस्यान्वयं कृत्वा पार्थप्रतियो-गिकान्यत्वविशिष्टप्रतियोगिकयोगत्वावच्छिन्नस्य प्रतियोगित्वनिरूपकत्व-सम्बन्धेन व्यवच्छेदेऽन्वयः कर्त्तव्यः। तथा च पार्थान्यप्रतियोगिकतादा-त्म्यसम्बन्धाभावो धनुर्द्धरे प्रसिद्धः। तथा च व्यवच्छेदत्वावच्छिन्नधर्म्मि-तानिरूपिता प्रतियोगित्वनिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता परंपरया पार्थत्वाद्यवच्छिन्नाऽपि प्रवृत्तिनिमित्तलक्षणे च धर्मितानिरूपितप्रकारतायां प्रातिपदिकस्य स्वेतरप्रातिपदिकप्रतिपाद्यतावच्छेदकधर्म्मानवच्छिन्नत्व-मपि तृतीयः सम्बन्धो निवेश्यतेऽन्ययोगत्वावच्छिन्ना च प्रकारता पार्थत्वा-वच्छिन्नत्वेन तथाभूता नास्तीति न दोष इति दिक्।

मात्रपदेन प्रातिपदिकार्थेतरस्य प्रकारतयाऽबोधकत्वमेव बोध्यते। तेन समवायादेः प्रवृत्तिनिमित्तप्रतियोगिकस्य संसर्गतया बोधकत्वेऽपि प्रथमा सिद्धा। तथा राम इत्यादौ संख्याया आधिक्येऽपि प्रथमा प्राति-पदिकार्थेतरो यस्संख्यातिरिक्तस्तदबोधकादित्यर्थादन्यथा द्व्येकयोर्द्विवच-नैकवचने बहुषु बहुवचनमितिसूत्राभ्यामेकवाक्यतया एकत्वद्वित्वबहुत्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशिष्टप्रातिपदिकार्थमात्रबोधकात्प्रातिपदिकादेकवचनद्विवचनबहुवचनानि स्युरिति बोधस्यैव सत्त्वेन सङ्ख्याविशिष्टबोधकत्वसंख्याबोधकत्वाभावयोर्विरोधात् सूत्रस्यैव वैयर्थ्यापात इति बोध्यम्।

---

## ३०. इदमपि सूत्रं क्रियायोग एव प्रवर्त्तत इति

ननु घटोऽस्तीत्यादौ तिवर्थकर्त्तर्य्येव घटपदार्थस्याभेदेनान्वयात् क्रियायामनन्वयेन कथं प्रथमायाः साधुत्वम्। न च घटाभिन्नस्य कर्तुः क्रियायामन्वयेन घटस्याप्यन्वयो जात एवेति वाच्यम्। तथा सति देवदत्तः स्वस्य पुत्रं पश्यतीत्यादौ स्वपदार्थस्यापि तिवर्थाभिन्नतया क्रियान्वयेन स्वशब्दादपि प्रथमापत्तेरिति चेत्—न, क्रियानिष्ठविशेष्यतानिरूपितवृत्तित्वसम्बन्धावच्छिन्नप्रकारतासमानाधिकरणविशेष्यताविशिष्टात् प्रातिपदिकात् कारकविभक्तिरित्यर्थेनादोषात्। वैशिष्ट्यञ्च-स्वनिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताश्रयबोधकत्वस्वसमानाधिकरणभेदसम्बन्धावच्छिन्नप्रकारत्वाप्रयोजकत्वोभयसम्बन्धेन। स्वस्य पुत्रमित्यादौ भेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वान्न प्रथमा। नीलः सुन्दरो घटोऽस्तीत्यादौ च सर्वत्र प्रथमा सिद्धा। तथैव सुन्दरं पण्डितं पुत्रं पश्यतीत्यादौ द्वितीयादिः। स्वस्य पुत्रं पश्यन्तं पश्येत्यादौ च स्वपदान्न द्वितीया। क्रियापदेन धात्वर्थमात्रं गृह्यते। तेन द्वितीयान्तार्थस्य फलेऽन्वयेऽपि न क्षतिः।

---

## ३१. कर्त्तुरीप्सिततमं कर्म्म १।४।४९

आप्नोतेस्सन्नन्तात् कर्म्मणि क्तस्तदन्तात्तमप् आप्धातोस्सम्बन्धोऽर्थस्स चोपस्थितत्वात् कर्तृपदार्थविशेषणीभूतव्यापारद्वारको व्यापारविशिष्टफलाश्रयत्वरूपः। वैशिष्ट्यञ्च स्वप्रयोज्यत्वस्ववाचकधातुवाच्यत्वोभयसम्बन्धेन। यद्यप्येकसम्बन्धेन वैशिष्ट्यदानेऽपि सम्बन्धत्वोपपत्तिस्तथापि तमप्प्रत्ययादुभयसम्बन्धेन वैशिष्ट्यरूपातिशयलाभात् सम्बन्धद्वयनिवेशः। धात्वर्थसम्बन्धस्य च सन्नर्थेच्छायां स्वप्रकारकत्वसम्बन्धेनान्वयः कर्त्तृशब्दः प्रकृते प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रयरूपस्वतन्त्रपरो न तु कर्त्तृसंज्ञकपरोऽत एव शत्रूनगमयत्स्वर्गमित्यादावण्यन्तकर्त्तुः



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शत्र्वादेर्णौ कर्म्मत्वेऽपि तदीप्सितस्य स्वर्गादेः कर्म्मत्वसिद्धिः। कर्त्तृसंज्ञकपरत्वे च तस्य तत्त्वाभावान्न स्यात्। न च शत्रुव्यापारस्य ण्यर्थव्यापारविशेषणत्वेनाप्राधान्यात् कथन्तदाश्रयस्य शत्रोस्स्वातन्त्र्यमपीति वाच्यं, गम्धात्वर्थे तस्यैव प्राधान्येन तदुपपत्तेः। अत एव पाचयति देवदत्तेनेत्यादौ तृतीयोपपत्तिरन्यथा तत्रापि ण्यर्थव्यापारविशेषणीभूतव्यापाराश्रयस्य देवदत्तादेः कर्त्तृत्वानापत्त्या तृतीयानापत्तिः कर्त्तुरित्यत्र कर्तरि षष्ठी क्तस्य च वर्त्तमान इति सूत्रात् कर्त्ता च व्यापाराश्रयो व्यापारस्य च धातुलभ्यत्वादाश्रयमात्रं षष्ठ्यर्थस्तस्मिन् प्रकृत्यर्थस्याभेदसम्बन्धेनान्वयो विशेषणांशेऽधिकस्यावगाहनात् घटो घट इत्यत्रेवात्राभेदान्वयो न स्यादिति नाशङ्कनीयम्। नीलघटो घट इत्यत्रेवान्वयसम्भवात आश्रयस्य वृत्तित्वसम्बन्धेनेच्छायामन्वयः। क्तप्रत्ययार्थो विषयताश्रयस्तदेकदेशविषयतायाञ्च निरूपितत्वसम्बन्धेनेच्छाया अन्वयः। तथा च प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रयाभिन्नाश्रयवृत्तिर्व्यापारविशिष्टफलाश्रयत्वप्रकारिका येच्छा तन्निरूपितविषयताश्रयः कर्म्मसंज्ञक इत्यर्थः। वैशिष्ट्यं पूर्वमुक्तम्। न च कर्त्तुरित्यत्र षष्ठ्युपपत्तये वर्त्तमान एव क्तप्रत्यय इत्यस्यावश्यं वक्तव्यतया वर्त्तमानस्य प्रकृत्यर्थेच्छायामेवान्वयो वाच्यः। तथा च वर्त्तमानकालिकेच्छाविषयस्यैव कर्म्मत्वेन भूतभविष्यदिच्छाविषयस्य कर्म्मत्वानापत्तिर्न च सर्वस्य क्रियाश्रयकालस्य प्रारब्धापरिसमाप्तक्रियाश्रयत्वरूपवर्त्तमानत्वस्य सत्त्वेन वर्त्तमानकालिकत्वविशेषणेऽपि न भूतकालिकादीच्छाव्यावृत्तिरिति वाच्यं, तथा सति भवतीत्यादिप्रयोगाणां व्यवस्थानापत्त्या स्वजन्यबोधविषयत्वेन तात्पर्य्यविषयत्वस्वोच्चारणाधिकरणकालवृत्तित्वोभयसम्बन्धेन । स्वविशिष्टक्रियाबोधनेच्छायां स्वोत्तरं प्रत्यय इत्यर्थस्यैव वर्त्तमाननिमित्तकप्रत्ययविधायकशास्त्राणां सत्त्वेन भूतकालिकेच्छादीनां व्यावृत्तिसम्भवात्। न चैवं सति **पाणिनि**नेप्सधातूच्चारणं यस्मिन् काले कृतं तत्कालिकेच्छाविशेष्यस्यैव कर्म्मत्वापत्ताविदानीन्तनेच्छाविषयस्य कर्म्मत्वानापत्त्या तण्डुलं पचतीत्यस्याप्यनापत्तिः **पाणिनि**कर्त्तृकेप्सितेत्येतदुच्चारणाधिकरणकालवृत्तीच्छामादाय कटं कृतवानित्यस्येदानीन्तनप्रयोगस्य तामेवेच्छामादाय तस्याः प्राक्कालवृत्तिकटं करिष्यतीत्यस्य चोपपत्तौ **शेखरकृता** वर्त्तमानत्वाविवक्षाफलत्वेनोपन्यस्तस्य कटं कृतवान् कटं करिष्यतीत्यस्य सिद्धिरित्यस्यासङ्गत्यापत्तिः भूतभविष्यत्प्रत्ययघटितप्रयोगासिद्ध्युद्भावनसूचितायाः कटं करोतीत्येतत्सिद्धेरसङ्गत्यापत्तिश्चेति वाच्यं, पूर्वपरदिनाधिक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रणकेच्छाविषयस्य कर्म्मत्वानापत्तितात्पर्य्येणैव शेखरोक्तेस्सत्त्वात् । इदानीन्तनकटं करोतीत्यस्याप्युपलक्षकत्वाच्चेति वाच्यम्, वर्त्तमानत्वस्याविवक्षायामपि वर्त्तमानकालनिरूपितशक्तिमतः क्तप्रत्ययस्य योगे षष्ठीत्यर्थकेन क्तस्य च वर्तमान इति सूत्रेण षष्ठीविधाने बाधकाभावात्, वर्त्तमानत्वस्याविवक्षणेऽपि वर्त्तमाननिरूपितशक्तेस्सत्त्वात्। ननु भूतकालबोधनेच्छयाऽप्युच्चरितक्तप्रत्यययोगे राज्ञा पूजित इत्यादौ षष्ठ्यापत्तिर्वर्त्तमानत्वनिरूपितशक्तेस्तत्रापि सत्त्वाच्छक्तेश्शक्ततावच्छेदकनियतत्वात्। न च वर्तमानेतरकालविषयकबोधजनकत्वप्रकारकतात्पर्य्यीयविशेष्यत्वाभाववत् क्तप्रत्यययोगे षष्ठीत्यर्थेन वर्त्तमानत्वाविवक्षायां षष्ठ्या भूतत्वविवक्षायान्तदभावस्य च सिद्धिरिति वाच्यम्, एकदैकक्रियायां भूतकालिकत्ववर्त्तमानकालिकत्वयोर्बाधेन बोधाभावेऽपीच्छारूपतात्पर्य्यस्याबाधाद्यत्र वर्त्तमानत्वं भूतत्वञ्चोभयं तात्पर्य्यविषयीभूतं तत्र षष्ठ्यनापत्तेस्सूत्राक्षरस्वारस्यभङ्गापत्त्येष्टापत्तेरयोगात्। किञ्च सूत्रे लिङ्गवचनमतन्त्रमिति सिद्धान्तात् तस्यापत्यमित्यादावपत्यशब्दार्थगतनपुंसकत्वस्याविवक्षया तत्रामादेशाय नपुंसकादित्यस्याप्युक्तरीत्या नपुंसकत्वेतरलिङ्गाबोधकादित्यर्थस्यैव वक्तव्यत्वेन तत्र भव इत्यादावपि पुंस्त्वस्याविवक्षायां सोरमापत्तिरिति चेत्—

अत्रोच्यते—कर्त्तुरीप्सिततममिति सूत्रं कर्म्मपदशक्तिग्राहकं कर्म्मपदशक्यतावच्छेदककोटाविच्छाविशेषणतया वर्त्तमानत्वन्न विवक्ष्यते। तेन भूतभविष्यदिच्छामादायापि कर्म्मत्वसिद्धिस्तत्सूत्रजन्यबोधे इच्छाविशेषणतया तु वर्त्तमानत्वं विवक्षितमेव। तेन षष्ठ्यपि सिद्धा। न हि तत्पदशक्तिग्राहकवाक्यजन्यबोधविषयस्य सर्वस्य तत्पदशक्यतावच्छेदककोटौ विशेषणत्वमेवेति नियमः शक्यतानवच्छेदकस्यापि बुद्धिस्थत्वादेर्बुद्धिस्थस्तत्पदशक्य इति शक्तिग्राहकवाक्यजन्यबोधविषयत्वदर्शनात्। न च तत्र बुद्धिस्थत्वं शक्यतानवच्छेदकमप्युपलक्षणतयाऽबुद्धिस्थव्यावर्त्तकं यथा भवति तथा कर्म्मपदशक्यतानवच्छेदकमपि वर्त्तमानत्वमुपलक्षणतया भूतभविष्यदिच्छाव्यावर्त्तकं भविष्यत्येवेति वाच्यम्। तथा नियमस्याप्यनङ्गीकारात् अयं घटस्तत्पदशक्य इति वाक्यजन्यबोधविषयस्यापीदन्त्वस्य तत्पदशक्यतोपलक्षकत्वस्याप्यभावात्। एवमेव तस्यापत्यमित्यादिवाक्यमण्प्रत्ययशक्तिग्राहकं तद्वाक्यजन्यबोधेऽपत्यविशेषणतया नपुंसकत्वभानेऽप्यण्प्रत्ययशक्यतावच्छेदकतयाऽविवक्षितत्वं सूत्रे लिङ्गवचनमतन्त्रमित्यनुशासनात्। तेन तस्यापत्यमित्यत्रामादेश औपगव इत्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दावग्न्ते नपुंसकत्वाभावश्चोपपद्यत इति। सम्बन्धघटकवैशिष्ट्यनियामकद्वितीयसम्बन्धनिवेशात्प्रयागात् काशीं गच्छति चैत्रे प्रयागं गच्छतीति न प्रयोगोऽन्यथा गम्धात्वर्थव्यापारस्य प्रयोज्यो यथा काशीसंयोगस्तथा प्रयागविभागोऽपि तदाश्रयत्वेनेच्छोद्देश्यत्वस्यापि प्रयागे सत्त्वात्तथा प्रयोगापत्तेर्द्वितीयसम्बन्धनिवेशे तु न विभागस्य गम्धातुवाच्यत्वाभावात्। संयोगानुकूलव्यापारस्यैव गम्धात्वर्थत्वात्। प्रयोज्यत्वनिवेशाच्चाग्नेर्म्माणवकं वारयतीत्यादावग्नेर्न कर्म्मत्वापत्तिस्संयोगानुकूलव्यापाराभावानुकूलव्यापारो हि वारयतेरर्थः। तत्र संयोगस्य व्यापारवाचकवारिधातुवाच्यत्वात्संयोगाश्रयत्वेनाग्नेरिच्छोद्देश्यत्वात्कर्म्मत्वापत्तिस्स्यात्। तस्य संयोगस्य तादृशव्यापारप्रयोज्यत्वाभावाच्च तन्निवेशे दोषाभावः।

ननु माणवकस्यैव व्यापारजन्यफलाश्रयत्वेन वारयितुरिच्छोद्देश्यत्वन्न तु वह्नेस्संयोगाश्रयत्वेन तदिच्छाविषयत्वं विरोधादिति कथं वह्नेः कर्म्मत्वापत्तिः। न च यदा दुष्टो भृत्यस्तदा वारयितुर्दुष्टस्य भृत्यस्य संयोगाश्रयत्वेन वह्नेरिच्छाविषयत्वं स्यादिति वाच्यम्। एकदा वह्निर्म्माणवकव्यापारजन्यसंयोगाश्रयो भवतु माणवकश्च वह्निसंयोगानुकूलव्यापाराभाववान् भवत्वितीच्छाद्वयोरेकस्मिन् पुरुषे विरोधादसम्भवेन दुष्टस्यापि वारयितुस्तादृशेच्छाया असम्भवात्। न च वह्नेर्वारयितुस्तादृशेच्छोद्देश्यत्वाभावे अपादानत्वमपि न स्याद्वारणार्थानामीप्सित इति सूत्रेणेप्सितस्यैवापादानसंज्ञाविधानात्तमब्ग्रहणाभावे कर्म्मसंज्ञाऽपादानसंज्ञयोरीप्सितत्वनिमित्तत्वाविशेषात् व्यापारवाचकधातुवाच्यफलाश्रयत्वेनेच्छोद्देश्यत्वस्यैवेप्सितत्वरूपत्वादिति वाच्यं, कर्म्मसंज्ञायां कर्तृग्रहणात् कर्त्तुरीप्सितत्वमपेक्षते। अपादानसंज्ञायां च कर्तृग्रहणाभावेन कारकाधिकारात् कारकमात्रेप्सितत्वस्यापेक्षितत्वेन वारयित्रीप्सितत्वाभावेऽपि माणवकादेरीप्सितत्वस्य सत्त्वेनापादानसंज्ञायां बाधकाभावादिति चेत्—अत्रोच्यते—कर्त्तुरिति सूत्राप्रवृत्तावपि तथायुक्तञ्चानीप्सितमिति सूत्रेण कर्म्मत्वप्राप्तिस्तमब्ग्रहणाभावे व्यापारवाचकधातुवाच्यफलाश्रयत्वस्यैव तथायुक्तत्वरूपत्वात्। नन्वेवमपि वारणार्थानामिति सूत्रमनवकाशत्वात्कर्म्मसंज्ञाबाधकं स्यादिति चेत्सत्यम्। तथा सति बाध्यसामान्यचिन्तया कर्म्मसंज्ञायामपादानसंज्ञोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन संकोचापत्त्याऽग्नेर्म्माणवकं वारयतीत्यादौ माणवकादेरपि कर्म्मत्वानापत्तिरिति तत्त्वम्।

ननु यदा कालिकसम्बन्धेन मद्वृत्तिव्यापारजन्यफलाश्रयः कालो भवत्वितीच्छया व्यापारं करोति चैत्रस्तदा कालं गच्छतीत्यादिप्रयोगा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पत्तिः। कर्तृव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यत्वेन कालस्य कर्म्मसंज्ञाया निर्बाधात् कालिकसम्बन्धेन विक्लित्याश्रयः पाषाणं भवत्वितीच्छामादाय पाषाणं पचतीत्याद्यापत्तिश्च। समवायसम्बन्धेन फलाश्रयत्वनिवेशे उक्तापत्तिवारणेऽपि घटं नाशयतीत्यादौ घटमिच्छति घटं जानातीत्यादौ च गतिविरहः। आद्ये प्रतियोगितासम्बन्धेन नाशरूपफलाश्रयत्वं घटस्य अन्त्ययोरिच्छाज्ञानानुकूलव्यापारार्थकत्वे विषयतानिरूपकेच्छाज्ञानरूपार्थकत्वे वा विषयतां स्वरूपसम्बन्धाभ्यामेवेच्छाविषयतारूपफलाश्रयत्वेन समवायसम्बन्धेन फलाश्रयत्वाभावात्कर्म्मत्वानापत्तेः। कालिकान्यसम्बन्धेन फलाश्रयत्वनिवेशेऽपि न निस्तारः। तथा हि-कालानुयोगिकविशेषणतारूपः कालिकश्चेत्पाषाणं पचतीत्यस्यानिस्तारः स्वाधिकरणकालवृत्तित्वरूपः कालिकश्चेत्कालं पचतीत्यस्यानिस्तार उभयोर्न्निवेशे जनकत्वसम्बन्धेन फलाश्रयो व्यापारो भवत्वित्यादीच्छामादाय व्यापारं पचतीत्याद्यापत्तिः। कालिकातिरिक्तवृत्तितानियामकसम्बन्धेन फलाश्रयत्वनिवेशे विषयितासम्बन्धेन मद्वृत्तिव्यापारजन्यविक्लित्याश्रयो ज्ञानं भवत्वितीच्छामादाय ज्ञानं पचतीत्यापत्तिर्विषयिताया वृत्तिनियामकत्वाद् ज्ञाने घट इति प्रत्ययात्। अत्रोच्यते फलतावच्छेदकसम्बन्धेन फलाश्रयत्वनिवेशः। फलतावच्छेदकश्च फलनिष्ठाधेयतावच्छेदकतया यो धात्वर्थतावच्छेदकस्स एव। सर्वेषाञ्च धातूनां फलविशिष्टव्यापारे शक्तिः। वैशिष्ट्यञ्च स्वजनकत्वस्वाधिकरणवृत्तित्वोभयसम्बन्धेन। तत्तद्धातुस्थले फलनिष्ठाधेयतावच्छेदकतया तत्तत्सम्बन्धो निवेशनीयो यथा पच्धातोर्विक्लितिविशिष्टो व्यापारोऽर्थः। वैशिष्ट्यञ्च स्वजनकत्वस्वनिष्ठसमवायसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तित्वोभयसम्बन्धेन। तथा च तत्र फलतावच्छेदकस्समवाय एव न तु कालिकादिः। तेन सम्बन्धेन फलाश्रयत्वप्रकारकेच्छाविषयस्तण्डुलाद्येव न कालपाषाणादिरिति निरुक्तेच्छाविषयस्य कालादेर्न्न कर्म्मत्वम्। यदि च समवायसम्बन्धेन विक्लित्याश्रयः कालः पाषाणं वा भवत्वितीच्छा तदा कालं पचतीत्यादिप्रयोगो भवत्येव। एवं नाशयतीत्यादौ नाशविशिष्टो व्यापारो धात्वर्थः। वैशिष्ट्यञ्च-स्वजनकत्वस्वनिष्ठप्रतियोगित्वसम्बन्धावच्छिन्नाधेयतानिरूपिताधारतावद्वृत्तित्वोभयसम्बन्धेन। घटं जानातीत्यादौ घटमिच्छतीत्यादौ च ज्ञानेच्छाविशिष्टव्यापारोऽर्थः। वैशिष्ट्यञ्च-स्वजनकत्वस्वनिष्ठविषयतासम्बन्धावच्छिन्नाधेयतानिरूपिताधारतावद्वृत्तित्वोभयसम्बन्धेन। तथा चाद्ये फलतावच्छेदकः प्रतियोगितासम्बन्धोऽन्त्ययोः फलतावच्छेदको विषयतेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्र तत्र तेन तेन सम्बन्धेनैव फलाश्रयस्य कर्म्मत्वम्, न तु तदतिरिक्तसम्बन्धेन फलाश्रयस्य कालादेः कर्म्मत्वम्। एवं प्रकारेण यद्यद्धातुसमभिव्याहारे यस्य यस्य कर्म्मत्वमिष्टन्तत्तन्निष्ठकर्म्मत्वोपयोगितत्तत्सम्बन्धान्तर्भावेण धातोरर्थो वाच्यः। प्रतीत्यनुसारेणैव शब्दार्थस्य कल्पनात्।

नन्वेवमपि स्तोकं पचतीत्यादौ विक्लित्यभिन्ने स्तोकादौ समवायसम्बन्धेन विक्लित्याश्रयत्वाभावात्कथं कर्म्मत्वं व्यपदेशिवद्भावेन स्वस्मिन् स्वघटितत्वस्वघटकत्वयोरेवातिदेश इत्यर्थस्यैवान्यत्र सिद्धान्तितत्वेन समवायसम्बन्धेन स्वाश्रयत्वस्य स्वस्मिन्नतिदेशेनाप्यभावादिति चेत्—न, फलतावच्छेदकतादात्म्यान्यतरसम्बन्धेन फलसम्बन्धिन एव कर्म्मत्वमित्यर्थेनादोषात्।

केचित्तु फलं प्रति व्यापारस्य जनकत्वात्केनचित्सम्बन्धविशेषेणैव कार्यता वक्तव्या। तथा च समवायसम्बन्धेन विक्लितित्वावच्छिन्नं प्रति व्यापारस्य कारणत्वं प्रतियोगित्वसम्बन्धेन नाशं प्रति व्यापारस्य कारणत्वं कारणतावच्छेदकसम्बन्धश्च यथा सम्भवमुन्नेयः। प्रकृते प्रयोजनाभावान्न विचार्यते। तथा च फलनिष्ठकार्य्यतावच्छेदकसम्बन्ध एव फलतावच्छेदकस्तेन सम्बन्धेन फलाश्रयः कर्म्म स्तोकं पचतीत्यादौ पूर्वोक्तैव गतिरित्याहुः—

तन्न। अर्थभेदेनैव कार्यकारणभावभेदात् वृक्षं त्यजति वृक्षाद्विभजते। अत्र द्वयोरपि धात्वोर्विभागानुकूलव्यापार एवार्थः। तथा च यदि समवायसम्बन्धेन विभागत्वावच्छिन्नं प्रति व्यापारः कारणमिति कार्यतावच्छेदकस्समवायस्स एव फलतावच्छेदकः तेन सम्बन्धेन विभागाश्रयो वृक्षं त्यजतीत्यत्र यथा वृक्षस्तथावृक्षाद्विभजते। अत्रापि समवायसम्बन्धरूपफलतावच्छेदकसम्बन्धेन विभागरूपफलाश्रयो वृक्षः। तस्याप्यपादानसंज्ञां बाधित्वा कर्म्मसंज्ञापत्तेः। वृक्षं त्यजतीत्यादौ कार्यतावच्छेदकस्समवायः विभजत इत्यत्रानुयोगित्वसमानाधिकरणसमवाय इति। आद्ये कर्म्मत्वमपरत्रापादानत्वमिति व्यवस्थोपपत्तिरिति चेत्—न। अर्थभेदाभावेन कार्यकारणभावभेदाभावात्। धात्वर्थतावच्छेदकस्य फलतावच्छेदकत्वे तु त्यज्धातोः प्रतियोगित्वसमानाधिकरणसमवायसम्बन्धावच्छिन्नस्वनिष्ठाधेयतानिरूपिताधिकरणताश्रयवृत्तित्वस्वजनकत्वोभयसम्बन्धेन विभागविशिष्टव्यापार एवार्थः। तथा च फलतावच्छेदकसम्बन्धःप्रतियोगित्वसमानाधिकरणसमवायः तेन सम्बन्धेन विभागरूपफलाश्रयो वृक्षः। तस्य कर्म्मत्वम्। विपूर्वकभज्धातोश्चानुयोगित्वसमानाधिकरणसमवायसम्बन्धावच्छिन्नस्वनिष्ठाधेयतानि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपिताधिकरणताश्रयवृत्तित्वस्वजनकत्वोभयसम्बन्धेन विभागविशिष्टो व्यापारोऽर्थः। तथा चानुयोगित्वसमानाधिकरणसमवायः फलतावच्छेदकस्तत्र तेन सम्बन्धेन विभागरूपफलाश्रयो वृक्षाद्विभजते खग इत्यत्र खग एव न वृक्षस्तस्य तु प्रतियोगित्वसमानाधिकरणसमवायसम्बन्धेन विभागाश्रयत्वमिति फलतावच्छेदकसम्बन्धेन फलाश्रयत्वाभावात् कर्म्मत्वाप्राप्तावपादानत्वमेव। खगस्य तेन सम्बन्धेन फलाश्रयत्वेऽपि न कर्म्मत्वम्, परया कर्त्तृसंज्ञया वाधात्।

नन्वेवमपि वृक्षाद्विभजत इत्यादौ वृक्षस्य कर्म्मत्वं दुर्वारं प्रतियोगित्वसमानाधिकरणसमवायस्यापि वृक्षं त्यजतीति प्रयोगानुरोधेन फलतावच्छेदकत्वात्तेन सम्बन्धेन विभजतिसमभिव्याहारेऽपि वृक्षस्य विभागाश्रयत्वात्। न च त्यजतीत्यत्र तस्य फलतावच्छेदकत्वेऽपि भज्धातुसमभिव्याहारेऽनुयोगित्वसमानाधिकरणसमवायस्यैव फलतावच्छेदकत्वमिति न दोष इति वाच्यं, यत्र तत्रेत्यस्य प्रवेशेऽननुगमात्। एवं माषेष्वश्वं वध्नातीत्यादौ माषाणां कर्म्मत्वापत्तिरश्वस्यापि अश्वो गच्छति भक्षयतीत्यादिप्रयोगे कर्त्तृत्वात्तदीप्सिततमत्वस्य माषेषु सत्त्वात्।

ननु प्रकृतधातूपात्तप्रधानीभूतव्यापाराश्रयस्यैव कर्त्तृत्वेनाश्वस्य तत्त्वाभावान्न दोष इति चेत्–न, प्रकृतत्वस्याऽनुगतानतिप्रसक्तस्य दुर्वचत्वादिति चेत्–अत्रोच्यते स्वविशिष्टेच्छीयविशेष्यताश्रयः स्वकर्म्मेति सूत्रार्थः। स्वं धातुः इच्छायां धातुवैशिष्ट्यं स्वजन्यबोधविषयत्वेन तात्पर्यविषयीभूतप्रधानीभूतव्यापाराश्रयवृत्तित्वस्वजन्यबोधविषयत्वेन तात्पर्य्यविषयीभूतप्रधानीभूतव्यापारप्रयोज्यत्वस्वबोध्यत्वेन तात्पर्य्यविषयत्वोभयसम्बन्धेन स्वविशिष्टफलनिरूपितत्वस्वजन्यबोधविषयत्वेन तात्पर्य्यविषयीभूतफलनिष्ठाधेयतावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन स्वविशिष्टाश्रयत्वप्रकारकत्वोभयसम्बन्धेन स्वनिरूपितकर्म्मत्वमेव च स्वसमभिव्याहृतकर्म्मप्रत्ययार्थ इति न कोऽपि दोषः। समन्वयः स्वयमूह्यः।

ननु यत्र तण्डुलनिष्ठविक्लित्यनुकूलव्यापारवानहं भवेयमित्याद्याकारकतण्डुलाद्यविशेष्यकेच्छाधीनैव पाकक्रिया तत्र तण्डुलादाविच्छीयविशेष्यताया विरहेण तण्डुलं पचतीति प्रयोगानापत्तिः। यदि च तादृशेच्छीयविषयताश्रयः कर्म्मेत्येवार्थस्तर्हि व्यापारफलादीनामपि विषयत्वाविशेषात् व्यापारं पचति फलं पचतीत्यादीनामप्यापत्तिः। अत्रोच्यते–मद्वृत्तिव्यापारप्रयोज्यफलाश्रयस्तण्डुलो भवत्वितीच्छाया एवाभिलाषस्तण्डुलनिष्ठविक्लित्यनुकूलव्यापारवानहं भवेयमित्यादिवाक्येन तथा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चैतद्वाक्याभिलप्यमानेच्छीयमुख्यविशेष्यतायास्तण्डुले एव सत्त्वेनापत्त्यभावः। अत एव मुख्यविशेष्यताया इच्छार्थकधातुसमभिव्याहारे कर्म्मप्रत्ययेन सुखमिच्छतीत्यादौ प्रतीतिस्तथा चाहं सुखी स्यामितीच्छास्थले सुखमिच्छतीति प्रयोगानुपपत्तिरित्याशंक्य मम सुखं भवत्वितीच्छाया एव अहं सुखी स्यामिति शब्दे नाभिलाप इति द्वितीयाव्युत्पत्तिवादे गदाधरेणोक्तम्। अथ वा यथा विधेयता प्रकारताविशेष्यताभ्यां भिन्ना विषयता विशेष्यविशेषणसाधारणी न तु विशेषणमात्रनिष्ठा पर्वतो वह्निमानिति बुद्धौ पर्वते वह्निरिति बुद्धौ च वह्नेरेव विधेयत्वात् तथोद्देश्यतापि ताभ्यां भिन्नैव न तु विशेष्यमात्रनिष्ठा। उक्तबुद्धिद्वये पर्वतस्यैवोद्देश्यत्वादित्यपि गदाधरेण द्वितीयायामुक्तम्। तथा च यथा मद्वृत्तिव्यापारप्रयोज्यफलाश्रयस्तण्डुलो भवत्वितीच्छीयोद्देश्यता तण्डुले एव तथा तण्डुलनिष्ठविक्लित्यनुकूलव्यापारवानहं भवेयमितीच्छीयोद्देश्यतापि तण्डुल एव। तथा च मद्वृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छाजन्यकृतिजनकेच्छीयोद्देश्यताश्रयः कर्म्मेति सूत्रार्थः। निरुक्तेच्छयोरन्यासाञ्च तण्डुलनिष्ठविक्लितिर्मद्वृत्तिव्यापारजन्या भवतु मदीयो व्यापारस्तण्डुलनिष्ठविक्लित्यनुकूलो भवत्वित्यादीनां समानकृतिजनकत्वेन तासामुद्देश्यतायाश्च तण्डुले एव सत्त्वेन तासु कस्या अपीच्छायास्सत्त्वे न दोष इति विभावनीयम्। सूत्रे एकस्या एवोपादानन्तु सर्वासान्तासां समानफलजनकत्वेनैकत्वमित्यभिप्रायेणेति दिक्।

ननु तण्डुलं न पचतीत्यादौ कथं तण्डुलादेः कर्म्मत्वं कर्तृवृत्तीच्छाया अभावेनेच्छीयोद्देश्यत्वाश्रयत्वस्य तण्डुलादावभावेन कर्म्मसंज्ञाविधायकसूत्रस्याप्राप्तेरिति चेत्—

अत्र केचित्—नञ्समभिव्याहारे फलाभावानुकूलव्यापारो धातोरर्थः। फलाभावरूपफलाश्रयत्वात्तण्डुलस्य कर्म्मत्वमित्याहुः। तन्न। फूत्कारादीनामेव पच्धातुवाच्यतया तेषां विक्लितिं प्रत्येव जनकत्वात् पचतीत्यादेर्विक्लित्यभावानुकूलव्यापारवाचकत्वाभावात् असमस्तनञः क्रियाऽभावबोधकत्वेनैव साधुत्वस्य साधुत्वमष्टकस्यास्य क्रिययैवावधार्य्यतामित्यनेन बोधितत्वाच्च। तण्डुलो विक्लित्यभाववान् भवत्वितीच्छाया अप्यभावे तथा प्रयोगस्येष्टस्यानापत्तेर्दुर्वारत्वाच्च। अत्रोच्यते—यत्र केवलं तण्डुलं पचतीत्युच्यते तत्र कर्म्मत्वोपपत्तिः। कर्त्तुरध्याहारेणैव कर्त्तव्याऽन्यथा सूत्रार्थसमन्वयस्याभावेन कर्म्मत्वानापत्तिस्तथैव तण्डुलं न पचतीत्यादावपि कर्त्तारमध्याहृत्य तद्वृत्तीच्छामादाय कर्मत्वो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पपत्तिं कृत्वा अन्यस्मिन् चैत्रादौ तण्डुलनिष्ठविक्लित्यनुकूलव्यापाराभावो नञा बोधनीय इति न काप्यनुपपत्तिः। न च यद्वस्तुविषयकपाकाप्रसिद्धि-र्य्यथा गगनादेस्तत्र कर्तृवाचकपदाध्याहारेणाप्यसिद्धिः। कस्यापि पाकक्रि-ययेप्सिततमत्वस्य गगनादेरभावेन गगनं न पचतीत्यादावनुपपत्तिस्तद-वस्थैवेति वाच्यम्। गगनादौ पाकासम्भवेऽपीच्छाया अनिवार्य्यतया पाकक्रियया गगनादेरप्याप्तुमिष्यमाणत्वे बाधकाभावात्। अत एव गगनं पचतीत्यादौ योग्यताविरहेण शाब्दबोधाभावेऽपि न व्याकरणासाधुत्वं योग्यताभ्रमे शाब्दबोधस्यापीष्टत्वाच्च।

नन्वेवमपि यत्र चैत्रो न पचति नापीच्छति तत्र चैत्रस्तण्डुलं पच-तीति कथं प्रयोगस्तत्र चैत्रस्य कर्त्तृत्वाभावात् तेन तण्डुलस्याप्तुमिष्यमा-णत्वाभावाच्च। न च तत्रापि तादृशं कर्त्तारमध्याहृत्य कर्म्मत्वोपप-त्तिरिति वाच्यम्, कर्त्रन्तरबोधस्य तत्राननुभवादिति चेत्—न। विवक्षातः कारकाणि भवन्तीति चिरन्तनोक्तेः चैत्रवृत्तिव्यापारप्रयोज्यफलाश्रयत्वेन तण्डुलस्य विवक्षितत्वात्। कर्म्मत्वोपयोगीच्छाया अपि तदानीं चैत्रे कल्पितत्वेन तामादाय सूत्रप्रवृत्तेरुपपादनीयत्वात्। अत एव रथो ग्रामं गच्छतीत्यादौ ग्रामस्योद्देश्यताया आरोपेण कर्म्मत्वमिति लघुमञ्जूषा-यामुक्तम्।

वस्तुतस्तु ग्रामं न गच्छति चैत्र इत्यादावपि फलाश्रयत्वप्रकार-केच्छीयोद्देश्यतां ग्रामादावारोप्यैव कर्म्मत्वोपपत्तिः कर्त्तव्या। कर्त्रन्तरा-ध्याहारस्तु न युक्तः ग्रामं गच्छन्ति न चैत्र इत्यापत्तेः तण्डुलं पचति न त्वमित्यापत्तेश्च। कर्त्रन्तराध्याहारे तेनैव सह तिवर्थकर्त्तुरन्वयेन चैत्रेण सह समानवचनत्वानियमात् त्वंपदार्थेन सहानन्वयेन त्वंपदस्य तिङ्सा-मानाधिकरण्यविरहेण मध्यमपुरुषस्याप्राप्तेश्च।

परमलघुमञ्जूषायामुद्देश्यत्वयोग्यस्य कर्म्मसंज्ञेत्यर्थकरणेन ग्रामं न गच्छतीत्यादौ कर्मत्वोपपत्तिः कृता सा न प्रामाणिकी लघुमञ्जूषा-यामभावात् योग्यताया अनुगमासम्भवाच्च। पदार्थो द्विविधो बौद्धो बाह्यश्च। नञ्समभिव्याहारे बौद्धस्यैव बोधः। नञ्पदन्तात्पर्य्यग्राहक-मिति बौद्धार्थमादायैव कर्म्मत्वमित्यपि केचित्।

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ३२. गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्माकर्म्मकाणामणिकर्त्ता स णौ १।४।५२

'शत्रून् अगमयत्स्वर्गमि'त्यादौ ण्यन्तधातोस्संय्योगानुकूलव्यापारानुकूलव्यापारोऽर्थः। तत्र प्रधानीभूतव्यापारप्रयोज्यं यत्संय्योगानुकूलव्यापारात्मकं फलन्तदाश्रयत्वप्रकारकेच्छोद्देश्यत्वाच्छत्रोः कर्म्मत्वं कर्त्तुरीप्सिततममित्यनेन प्राप्तं, णिच्प्रकृतिगम्धात्वर्थप्रधानीभूतव्यापाराश्रयत्वेन तस्य कर्त्तृत्वं प्राप्तम्। तत्र परत्वात्कर्त्तृसंज्ञा स्यात्। कर्म्मसंज्ञाया द्वितीयव्यापारसापेक्षत्वेन तदपेक्षया तदनपेक्षकर्त्तृसंज्ञाया अन्तरङ्गत्वाच्च कर्त्तृप्रयोजकस्य हेतुत्वात्तदीयव्यापारे णिज्विधानात्तदर्थव्यापारापेक्षकर्म्मसंज्ञां प्रति कर्त्तृसंज्ञाया उपजीव्यत्वाच्च। ताम्बाधित्वा गत्यादिसूत्रेण ण्यन्तगत्याद्यर्थकधातुयोगे प्रयोज्यस्य कर्म्मसंज्ञा विधीयत इति विधायकत्वमेतत्सूत्रस्य। अत एवोक्तं—

'परत्वादुपजीव्यत्वादन्तरङ्गतयाऽपि च।
प्रयोज्यस्यास्तु कर्त्तृत्वं गत्यादेर्विधितौचितेति'।

अत एवाकडारादेकासंज्ञेति सूत्रे प्राक्कडारात्परं कार्य्यमितिपाठे यत्र पूर्वया परस्या बाधः प्राप्नोति तत्र परा अनेन भाव्यते कार्य्यशब्देन संज्ञैवोच्यते इति बाधकबाधनार्थमिदं सूत्रं न तु नियमार्थम्। एका संज्ञेति पाठे तु नियमार्थमेवेति। तत्र परं कार्य्यमितिपाठे गतिबुद्ध्यादीनां ण्यन्तानां कर्त्तृकर्म्मसंज्ञामपि प्राप्नोति आरम्भसामर्थ्यात्कर्म्मसंज्ञा परकार्य्यत्वात् कर्त्तृसंज्ञेति दोष उक्तो भाष्ये। तत्रारम्भसामर्थ्यादित्यस्य-गतिबुद्धिसूत्रारम्भसामर्थ्यादित्यर्थः। अनेनापि गतिबुद्धिसूत्रस्य विध्यर्थत्वं सूचयति। यद्यपि शाब्दबोधीयविशेष्यताश्रयत्वरूपं शाब्दं प्राधान्यं णिजर्थव्यापारस्यैवास्ति तदनुरोधिकर्म्मसंज्ञाया अपि प्राधान्यात्प्रधानकार्य्यस्य सर्वतो बलवत्त्वादन्तरङ्गोपजीव्यामपि कर्त्तृसंज्ञां प्रति बाधकत्वेन कर्म्मसंज्ञैव स्यादिति गतिबुद्धिसूत्रं व्यर्थं सन्नियमार्थमेवेति प्राप्तन्तथापि शाब्दप्राधान्यापेक्षयोद्देश्यत्वलक्षणस्यार्थप्राधान्यस्यैवाकडारसूत्रस्थभाष्यप्रामाण्याल्लोकव्यवहाराच्च प्राबल्यमित्यभ्युपेयते।

ततश्च प्रयोज्यव्यापारस्यैवोद्देश्यत्वेन प्राधान्यात्तदनुरोधिकर्त्तृत्वस्यैव प्राधान्यमपीति विध्यर्थमेव गतिबुद्धिसूत्रमिति **प्राचीनमतम्**। **नवीनैस्तु** निरुक्तं शाब्दप्राधान्यमन्यानधीनत्वलक्षणमार्थं प्राधान्यमेतदुभयं णिजर्थ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यापारस्यैवास्तीति तदनुरोधिन्याः कर्म्मसंज्ञाया एव प्राधान्येन सिद्धौ नियमार्थमेव गत्यादिसूत्रम्। आकडारादिसूत्रस्थारम्भसामर्थ्यादित्यस्यै-तन्नियमारम्भसामर्थ्यादित्यर्थ इति न तस्माद्विधित्वमत एव हेतुमति चेति सूत्रे नियमार्थत्वमेवोक्तं भाष्यकृतेत्यभ्युपेयते। अत एवोक्तं—

गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्म्मतां गतः।
नियमात्कर्म्मसंज्ञायाः स्वधर्म्मेणाभिधीयते ॥

इति कर्त्तुः स्वधर्म्मेण तृतीययेत्यर्थः। णिजर्थव्यापारजन्यफलाश्रयस्य कर्म्मत्वं स्याच्चेद् गत्याद्यर्थकधातूपात्तव्यापाराश्रयस्यैवेति नियमः। तेन कर्त्तुरितिसूत्रे णिजर्थव्यापारजन्यफलाश्रयातिरिक्तस्यैवेप्सिततमस्य ग्रहण-मिति पाचयति देवदत्तेन यज्ञदत्त इत्यादौ देवदत्तस्य न कर्म्मत्वम्।

---

## ३३. येषां देशकालादिभिन्नं कर्म न सम्भवति ते अत्राकर्म्मका इति

अयं भावः। गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्मणामित्येव नियमस्य सजातीयापेक्षत्वात् णिच्प्रकृतिसकर्म्मकधातूपात्तव्यापाराश्रयस्य कर्म्मत्व-ञ्चेद्गत्याद्यर्थकादीनामेव धातूनां व्यापाराश्रयस्येति नियमार्थमस्तु 'आसयत्सलिले पृथ्वी' मित्यादौ नियमानाक्रान्ततया कर्त्तुरित्येव कर्म्मत्व-सिद्धेरकर्म्मकग्रहणं व्यर्थं सत् देशकालादिभिन्नं कर्म्म येषां न सम्भवति तद्धातुबोधकम्। अकर्मकपदघटककर्म्मपदस्य देशकालादिभिन्नकर्म्मार्थ इति तत्त्वम्। तेन न विद्यते देशकालादिभिन्नं कर्म्म येषां धातूनां ते धातवोऽकर्म्मकपदबोध्याः। तेन सत्यपि देशादीनां कर्म्मत्वे मासमासयति देवदत्तमित्यादौ देवदत्तस्य कर्म्मत्वसिद्धिरुक्तनियमेन तु न सिद्ध्येत् सकर्म्मकत्वेन नियमाक्रान्तत्वात् पाचयति देवदत्तेनेत्यादौ कर्म्मणोऽ-विवक्षास्थले तु न देवदत्तस्य नियमेनाकर्म्मकपदेन वा कर्मत्वं विवक्षास्थले-ऽस्यैव धातोः देशादिभिन्नकर्म्मसम्भवात् ज्ञापितेऽपि कथं चारितार्थ्य-मिति नाशङ्कनीयम्, मासमासयति देवदत्तमित्यादावकर्म्मकग्रहणाभावे कर्म्मत्वानापत्तेः। यदि च नियमस्य सजातीयापेक्षत्वादेव गत्याद्यर्थका-दीनां देशकालादिभिन्नकर्म्मवत्त्वाद्देशकालादिभिन्नकर्मवताञ्चेदेषामेवेति नियमस्तदा नियमेनैव मासमासयतीत्यादौ कर्म्मत्वस्य पाचयतीत्यादा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वविक्षास्थले तदभावस्य च सिद्धेरत्राकर्म्मकग्रहणं व्यर्थमेवेति नियमार्थत्ववादिमतम्।

यस्य मते कर्तृसंज्ञाबाधनार्थमिदं सूत्रं तन्मतेऽपि देशकालादिकर्म्मवत्त्वस्य व्याप्त्यन्तर्भावेण वृत्तौ सर्वेषां धातूनां सत्त्वात् येषां कर्म्म न विद्यते तेषां धातूनामप्रसिद्ध्या तदर्थकमकर्म्मकपदं व्यर्थमेव। अत एवोक्तं भाष्ये—न केचिद्देशकालादिभिरकर्म्मका इति। अनेन भाष्येण असम्भवत्कर्म्मको धातुरेवाकर्म्मकपदेन गृह्यते अन्यथा व्याप्त्यर्थाभावे देशकालादीनां कर्म्मत्वाभावात् अन्येषामसम्भवाच्च। अकर्म्मकधातोस्सम्भवान्न च केचिदित्युक्तेरसंगत्यापत्तेः। मम तु कुत्रापि तस्य कर्म्मणस्सम्भवान्नाकर्म्मकत्वं धातोरिति भाष्यं सङ्गतम्। तथा च व्यर्थं सदकर्म्मकग्रहणं देशकालादिभिन्नासम्भवत्कर्म्मक एवाकर्म्मकपदेन गृह्यत इति ज्ञापयति। तेन मासमासयति देवदत्तं पाचयति देवदत्तेनेति च सिद्धं सामान्यापेक्षं ज्ञापकम्। तेन सर्वत्राकर्म्मकपदमुक्तार्थकम्। अत एव मासमास्यते इत्यादौ सत्यपि मासस्य कर्म्मत्वे भावे लट्सिद्धिः पाचयति देवदत्तेनेत्यादौ तण्डुलादिकर्म्मणामविवक्षा। अविवक्षा च द्वेधा कर्म्मणस्सम्बन्धित्वेन विवक्षा, अथ वा धातोर्व्यापारमात्रबोधकत्वेन तात्पर्य्ये कर्म्मान्वययोग्यफलस्य त्यागः। इदं प्राचीनमतम्।

नवीनैस्तु अविवक्षितकर्म्माप्यकर्म्मकपदेन गृह्यते इत्युच्यते। अत एव कृतपूर्वीकटमित्यत्र कर्म्मणोऽविवक्षयाऽकर्म्मकत्वेन भावे क्तप्रत्यये कृते कर्म्मविवक्षया कटं कर्म्म, अविवक्षितकर्म्मणोऽकर्मकत्वाभावे भावे क्तप्रत्ययानापत्तिः। न च तत्र भाष्यप्रामाण्याद्भावे क्तप्रत्ययोऽत एवान्यत्राविवक्षितकर्म्मकाद्भावे क्तप्रत्ययो न दृश्यते इति वाच्यम्। अकर्म्मकत्वाभावेऽपि स्वसामर्थ्यादेव भावे क्तप्रत्ययकरणे कर्म्मणोऽविवक्षाया भाष्यकृत्कृताया वैयर्थ्यापत्तेः। लुनातेर्न्निवृत्तप्रेषणाण्णिचि लावयति केदारमिति कर्म्म, द्वितीयान्तस्य कैयटप्रयोगस्य णेरणावितिसूत्रस्थस्य गतिविरहाच्च। न च लावयतीत्यत्रार्थान्तरत्वादकर्म्मत्वन्न त्वविवक्षितकर्म्मकत्वादिति वाच्यं, प्रेरणांशस्य त्यागेऽपि फलांशस्य तस्यैव सत्त्वात्। स एवायमिति तत्त्वप्रत्यभिज्ञानाच्च अर्थान्तरत्वाभावात्। स्पन्दनार्थकवहेस्सर्वथा भेदप्रतीतावेवार्थान्तरत्वप्रयुक्ताकर्म्मकोदाहरणात्। अधीगर्थेति सूत्रे कर्म्मणः शेषत्वविवक्षयाऽकर्म्मकत्वे मातुः स्मर्य्यत इत्यत्र भावे लस्य भाष्ये उदाहृतत्वाच्च। न चाविवक्षितकर्म्मकस्याप्यकर्म्मकपदेन ग्रहणे अकर्म्मकपदस्य कर्म्मानन्वय्यर्थक इत्येवार्थो वक्तव्यो न त्वसम्भवत्कर्म्मक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यर्थः। तथा हि सति विवक्षास्थले तस्य कर्म्मसम्भवादविवक्षास्थलेऽपि अकर्म्मकत्वानापत्तिः। एवञ्च न च केचित् कालभावादिभिरकर्म्मका इति भाष्यासङ्गतिः। कालादीनां कर्म्मत्वोपयोगिव्याप्त्यर्थराहित्ये आस्धातो-रेव कर्म्मानन्वय्यर्थकत्वेनाकर्म्मकस्य सत्त्वात्।

**प्राचीनमते** तु व्याप्त्यर्थान्तर्भावेण आस्धातोर्वृत्तौ मासादिकर्म्म-सम्भवात् असम्भवत्कर्म्मकत्वस्यास्धातोरप्यभावान्न च केचिदिति भाष्यं सङ्गच्छत इत्येव यत्त्वित्यादिना **शेखरे**ऽपि शङ्कितमिति चेत्-सत्यम्।

अत्रोच्यते-अत एव भाष्यात् असम्भवत्कर्म्मक एवाकर्म्मकपदेन गृह्यते। तद्यकर्म्मकग्रहणमुक्तरीत्या व्यर्थं सद्देशकालादिभिन्नासम्भवत्कर्म्म-कमकर्म्मकमिति **प्राचीनमतमेव** युक्तम्। **शेखरकारै**श्चोक्तरीत्याऽकर्म्म-कग्रहणं व्यर्थं सत् अवस्थान्तरे कर्म्मरहितोऽकर्म्मकः। अत एव 'क्वचिद्ये अकर्म्मका' इति **भाष्ये** उक्तम्। अवस्थान्तरे इत्यस्य कालादेः कर्म्मसंज्ञा प्रयोजकव्याप्तिरहिते कर्म्मणोऽविवक्षायाञ्चेत्युभयं कृतपूर्वीकटमित्यत्र भावे क्तप्रत्ययकरणपरभाष्यात् विनिगमनाविरहाच्चार्थ इति अविवक्षित-कर्म्मकोप्यकर्म्मक इत्युक्तं तन्न युक्तं प्रतिभाति। एवमर्थे हि मासादिकर्म्मा-न्वयकाले आस्धातोरकर्म्मकत्वं न स्यात्। न च व्याप्तिरहितेऽर्थे अयमेव आस्धातुः कर्म्मरहित इति भवत्यकर्म्मको मासादियोगेऽपीति वाच्यम्। तथा सति तण्डुलादिकर्म्मान्वयकालेऽपि पच्धातुरकर्म्मकः स्यादस्यैवा-विवक्षास्थले कर्म्मरहितत्वात्। न चार्थभेदेन शब्दभेदादस्य पचस्ततो भेद इति वाच्यं, अस्धातावपि तुल्यत्वात्। न च मासादिभिन्नकर्म्मर-हितोऽकर्म्मकः पच्धातुश्चाविवक्षास्थलीयो विवक्षास्थलीयादर्थभेदेन भिन्न इति न दोष इति वाच्यम्, 'क्वचिद्येऽकर्म्मका' इति भाष्यात्तदर्थालाभात्। तस्य हि अवस्थान्तरे कर्म्मरहित इत्यर्थकत्वेनैव स्वयं व्याख्यातत्वात्। किञ्च लावयति केदारमित्यत्रेवार्थभेदाभावेनार्थभेदाच्छब्दभेद इत्यस्या-युक्तत्वम्। अत एवोक्तव्याख्यानेऽपरितुष्यता **नागेशेन** यद्वेत्यादिना यत्कर्म्म भवति न च भवति तेनाकर्म्मकाणामिति पक्षान्तरभाष्यादकर्म्मक-ग्रहणसामर्थ्याद्व्यभिचारिकर्म्मरहितोऽकर्म्मक इत्युक्तम्। मासादिकञ्च न व्यभिचारि। तस्य सर्वधातुकर्म्मत्वादिति तद्भावः। अस्मिन्नपि कल्पे शङ्काकाले योऽर्थोऽकर्म्मकपदस्य बुद्धोऽसम्भवत्कर्म्मक इति तस्य त्यागे मानाभावेन मासादिभिन्नासम्भवत्कर्म्मकोऽकर्म्मक इत्येव लभ्यते। परन्तु कृतपूर्वीकटमित्यत्र भावे क्तप्रत्ययबोधकभाष्यात् लावयति केदारमिति कैयटात् अधीगर्थेतिसूत्रस्थमातुः स्मर्य्यत इत्यत्र भावे लडित्यर्थबोधक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भाष्यादकर्म्मकाधिकारे श्रुदृश्यादिभ्य आत्मनेपदविधानाच्च देशकालादि-भिन्नकर्म्मानन्वय्यर्थकत्वमकर्म्मकत्वमिति शेखरोक्तमेव युक्तं प्रतिभाति। कर्म्मणोऽविवक्षया पचादिभ्यो भावे लादयस्तु अनभिधानादेव वारणीया इति दिक्। वस्तुतस्तु न च केचिदिति भाष्यात्प्राचीनोक्तमेव युक्तमुक्त-स्थलेष्वर्थान्तरत्वादकर्म्मकत्वमुपपाद्यमिति दिक् ॥

---

## ३४. स्वतन्त्रः कर्त्ता १।४।५४

स्वातन्त्र्यञ्च न व्यापाराश्रयत्वं, सर्वेषां कारकाणां स्वव्यापारद्वारैव प्रधानक्रियानिष्पादकत्वेन व्यापाराश्रयत्वात्, कर्त्तृत्वापत्तेः; नापि धात्वर्थ-व्यापाराश्रयत्वन्तत्, कर्त्तृभिन्नकारकव्यापारस्य धात्वर्थत्वाभावेनापत्त्य-भावात्। तस्य व्यापारस्य धात्वर्थत्वविवक्षायान्तु तदाश्रये कर्त्तृत्वस्य साध्वसिश्छिनत्तीत्यादाविष्टत्वादिति युक्तम्। अग्नेर्माणवकं वारयतीत्यादौ माणवकस्य कर्त्तृत्वापत्तेः; नापि प्रधानीभूतधात्वर्थव्यापाराश्रयत्वन्तत्, माणवकव्यापारस्य प्राधान्याभावेनापत्त्यभावेपि पक्वस्तण्डुलो देवदत्तेने-त्यादौ फलस्यैव प्राधान्येन व्यापारस्याप्राधान्याद्देवदत्तस्य कर्त्तृत्वानापत्तेः। अजा ग्रामं नीयत इत्यादावजायाः कर्त्तृत्वापत्तेश्च। तद्व्यापारस्य प्राधान्यात्। न च कर्त्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थव्यापाराश्रयत्वन्तत्, तद्व्यापारस्य तदानीमप्राधान्येऽपि कर्त्तृप्रत्यये पचतीत्यादौ प्राधान्य-सत्त्वात्। अजा ग्रामन्नीयत इत्यादौ अजाव्यापारस्य प्राधान्येऽपि नयती-त्यादौ कर्त्तृप्रत्ययसमभिव्याहारे प्राधान्याभावादिति शेखरोक्तं युक्तमिति वाच्यम्, कर्त्तृत्वञ्च स्वातन्त्र्यमिति स्वातन्त्र्यलक्षणे स्वातन्त्र्यप्रवेशेना-त्माश्रयात्। न च कर्त्तृत्वं संकेतसम्बन्धेन कर्त्तृपदवत्त्वमेवेति नात्माश्रय इति वाच्यम्, कर्त्तृपदवत्त्वज्ञानञ्च स्वातन्त्र्यज्ञानात्स्वातन्त्र्यज्ञानञ्च कर्त्तृपदवत्त्वज्ञानादित्यन्योन्याश्रयात् कर्त्तृप्रत्ययसमभिव्याहार इत्यस्य विशेषणत्वे तु कर्म्मप्रत्ययसमभिव्याहारे कर्त्तृत्वानापत्तिरपि दोषः। न च तिप्प्रत्ययसमभिव्याहार इति वाच्यम्। एधते देवदत्त इत्यादौ एध्धा-तोस्तिप्समभिव्याहाराभावेन देवदत्तस्य कर्त्तृत्वानापत्तेः। तृच्समभिव्याहार इत्युक्तावपि बोधस्य व्युत्पत्त्यनुसारित्वात् विपर्य्ययेण व्युत्पन्नानां पचती-त्यादावपि फलविशेष्यकबोधस्य सम्भवेन कर्म्मणोऽपि कर्त्तृत्वापत्तेर्ध्रौव्यात्।

अत्रोच्यते—प्रधानीभूतधात्वर्थाश्रयत्वमेव स्वातन्त्र्यम्। प्राधान्यञ्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जनकत्वेन प्रतीयमानत्वं, न तु शाब्दबोधीयविशेष्यताश्रयत्वम्। पच्यत इत्यादौ शाब्दबोधे व्यापारस्य विशेष्यत्वाभावेऽपि जनकत्वेन प्रतीयमानत्वस्य सत्त्वेनादोषात्। नन्वेवमपि अजां ग्रामं नयतीत्यादौ संय्योगानुकूलव्यापारानुकूलव्यापारस्य धात्वर्थत्वात् प्रथमव्यापारस्यापि जनकत्वेन प्रतीयमानत्वात्तदाश्रयस्याजादेः कर्त्तृत्वापत्तिरिति चेत्-न। जन्यत्वेनाप्रतीयमानत्वस्यैव प्राधान्यत्वाभ्युपगमेनाजाव्यापारस्य जनकत्वेन प्रतीतावपि जन्यत्वेनापि प्रतीयमानत्वेनादोषात्। न चैवमपि पाचयति देवदत्तेन यज्ञदत्त इत्यादौ प्रयोज्यव्यापारस्य णिजर्थव्यापारजन्यत्वेन प्रतीत्या तदाश्रयस्य प्रयोज्यस्य कर्तृत्वानापत्तिः। पचति देवदत्त इत्यादावपि देवदत्तजन्यत्वेन व्यापारस्य सर्वत्रैव प्रतीत्या कर्तृत्वानापत्तिश्चेति वाच्यम्। स्वविशिष्टव्यापारवत्त्वमेव स्वकर्त्तृत्वम्। वैशिष्ट्यञ्च-स्वजन्यबोधविषयत्वेन तात्पर्य्यविषयत्वस्वजन्यबोधविषयत्वेन तात्पर्य्यविषयीभूतार्थनिरूपितजन्यत्वेनाप्रतीयमानत्वोभयसम्बन्धेन। पाचयतीत्यादिण्यन्तस्थलेऽस्ति धातुद्वयं पच् पाचि इत्यादि तत्र प्रयोज्यस्य पच्धातुनिरूपितं कर्तृत्वमिति तस्य पच्धातुविशिष्टव्यापारवत्त्वं, प्रयोजकस्य पाचिनिरूपितमिति तस्य पाचिविशिष्टव्यापारवत्त्वम्। आद्यस्य विक्लित्यनुकूलव्यापारोऽर्थ इति व्यापारस्य पच्धातुवैशिष्ट्यं, द्वितीयस्य विक्लित्यनुकूलव्यापारानुकूलव्यापारोऽर्थ इति द्वितीयव्यापारस्य पाचिवैशिष्ट्यम्। अग्नेर्म्माणवकं वारयतीत्यादौ संयोगानुकूलव्यापाराभावानुकूलव्यापारोऽर्थो वारयतेस्तत्र प्रथमव्यापारस्य जन्यत्वेन प्रतीयमानत्वात्तदाश्रयस्य माणवकादेः कर्तृत्वापत्तिस्तु न स्वबोध्यत्वेन तात्पर्य्यविषयनिरूपितजन्यत्वेन प्रतीयमानाभावाप्रतियोगित्वरूपतृतीयसम्बन्धस्यापि निवेशनीयत्वादित्यलम्।

---

## ३५. इत्थंभूतलक्षणे २।३।२१

इत्थम्भूतः कञ्चित्प्रकारं प्राप्तः। प्रकारेऽर्थे थमुप्रत्ययः। प्राप्त्यर्थाद्भूधातोः कर्त्तरि क्तः। लक्ष्यतेऽनेनेति लक्षणं ज्ञापकं किञ्चिद्धर्म्मविशिष्टस्य ज्ञापकं यत्तद्वाचकात्तृतीयेति सूत्रार्थः। जटाभिस्तापस इत्यादौ प्रकारस्तापसत्वं धर्म्मस्तं प्राप्तस्य तद्धर्म्मविशिष्टस्य तापसस्य ज्ञापकं जटा तया तापसत्वप्रत्ययात् तद्वाचकात् जटापदात्तृतीया। जटाविषयकज्ञानजन्यज्ञानविषयीभूततापसत्ववानिति प्रयोगार्थः। ज्ञानजन्यज्ञानं तृतीयार्थः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विषयित्वसम्बन्धेन जटापदार्थस्य प्रत्ययार्थैकदेशे ज्ञानेऽन्वयः। द्वितीयज्ञानस्य च विषयतासम्बन्धेन तापसपदार्थैकदेशे तापसत्वेऽन्वयः। इत्थंभूतस्य यत्र लक्षणवाचकपदभिन्नपदादेवोपस्थितिस्तत्रैवेदं सूत्रं प्रवर्त्तते। तेन कमण्डलुपाणिं छात्रमद्राक्षीदित्यादौ कमण्डलुपदान्न तृतीया। अत्र छात्रत्वविशिष्टस्य ज्ञापकः कमण्डलुः। कमण्डलुज्ञानाद्धि छात्रोऽयमिति ज्ञायते। तद्वाचकत्वं कमण्डलुपदस्येव कमण्डलुपाणिशब्दस्यापि वहुव्रीहिणा कमण्डलुयुक्तपाणिविशिष्टछात्रबोधकस्य तस्य विशेषणतया कमण्डलुबोधकत्वात् तेनापि छात्रस्येत्थंभूतस्योपस्थितेस्सत्त्वात्। न च नेदं पृथगुपस्थितेः फलं समासे कृतेऽप्युत्पन्नायास्तृतीयायास्समासमध्यपतितत्वेन तन्मध्यपतितन्यायेन तृतीयाविशिष्टस्य समासग्रहणेन ग्रहणात्सुपो धात्विति लुक्प्रवृत्तेरिति वाच्यम्, तन्मध्यपतितन्यायस्य प्राप्त्यभावात्। तथा हि स्वविशिष्टः स्वग्रहणेन गृह्यते। वैशिष्ट्यं—स्वघटकपूर्वत्वस्वघटकोत्तरत्वस्वपर्य्याप्तोद्देश्यतानिरूपितविधेयताश्रयत्वैतत्त्रितयसम्वन्धेन। प्रकृते समासपर्य्याप्तोद्देश्यतानिरूपितविधेयताया अभावात्। सा हि तृतीया कमण्डलुपर्य्याप्तोद्देश्यतानिरूपितविधेयताश्रयीभूता। एतत्सम्वन्धनिवेशादेव जनराशब्दे जराशब्दत्वानतिदेशेन जरसादेशाभावः। तत्र हि नकारे स्वं जराशब्दस्तद्घटको जकारस्तदुत्तरत्वं स्वघटको राशब्दस्तत्पूर्वत्वञ्च वर्त्तते। परन्तु स्वपर्य्याप्तेत्यादिसम्वन्धाभाव इति कैयटमतम्।

शेखरकृता तु कमण्डलुपाणित्वं लक्षणत्वेन भाष्याभिमतन्तद्वाचकः कमण्डलुपाणिशब्दो वहुव्रीहिसंज्ञकस्तस्मात्तृतीयापत्तिः। यद्यपि कमण्डलोरपि लक्षणत्वं सम्भवति यत्र यत्र स्वयुक्तपाणिमत्त्वसम्वन्धेन कमण्डलुस्तत्र तत्र छात्रत्वमिति प्रत्ययात्, तथापि न तस्य लक्षणत्वं भाष्याभिप्रेतम्। एवं हि भाष्यं सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणमिति। अत्र तदेवेत्यस्य कमण्डलुपाणित्वमित्येवार्थो न तु कमण्डलुरित्यर्थस्तथा सति तस्य पुंस्त्वात् स एवेति वदेत् तस्मात् कमण्डलुपदान्न तृतीयेति कैयटोक्तं पृथगुपस्थितिफलं न युक्तम्। किञ्च कमण्डलुपदादुत्पन्नायास्तस्यास्तन्मध्यपतितन्यायेन समासग्रहणेन ग्रहणाल्लुगापत्त्या फलाभावः। न च तन्मध्यपतितत्वे तृतीयसम्वन्धनिवेशान्न तन्न्यायप्रवृत्तिरिति वाच्यम्। नरं मन्य इत्यत्रत्यभाष्यविरोधेन तत्सम्बन्धनिवेशस्याशक्यकर्त्तव्यत्वात्। तत्र हि इच एकाचोऽम्प्रत्ययवच्चेत्यनेन नृशब्दात् खिदन्ते मन्यशब्दे उत्तरपदे परे समासोत्तरममि तस्य स्वाद्यमुवद्भावे ऋतो ङीति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुणे नरम्मन्य इति जाते सुपो धात्वितिलुकमाशङ्क्याम्विधिसामर्थ्यान्न लुगित्युक्तम्। उक्ततृतीयसम्बन्धनिवेशे तु समासोत्तरजायमानस्य नृशब्दोद्देश्यकस्यामस्समासपर्य्याप्तोद्देश्यतानिरूपितविधेयताया अभावेन न्यायाप्रवृत्त्या लुकोऽप्राप्तौ भाष्यासङ्गतिः। जनराशब्दे दोषस्तु न जवर्णोत्तररावर्णत्वरूपजराशब्दत्वस्य कदापि कुत्रापि तत्राभावेनातिदेशेनानयनासम्भवात्।

अत्रेत्थं विचार्य्यते—तदेव लक्षणमितिभाष्यघटकं तत्पदं कमण्डलुलक्षणयोरुद्देश्यविधेययोरैक्यं प्रतिपादयत्यत उद्देश्यविधेयलिङ्गयोः पुंस्त्वक्लीवत्वयोः पर्य्यायेण प्रतिपादकं स्यात्। उद्देश्यविधेययोरैक्यं प्रतिपादयत्सर्वनामपर्य्यायेण तत्तल्लिङ्गभागिति शेखरकृतोक्तत्वात्। प्रकृते विधेयभूतलक्षणगतलिङ्गस्यैव नपुंसकत्वस्याभिधानेन तदिति नपुंसकत्वोपपत्तिः। नरं मन्य इति भाष्यविरोधोऽपि न। उत्तरपदशब्दस्य समासचरमावयवे रूढित्वेन समासचरमावयवे खिदन्ते परे इत्यर्थेन समासत्वावच्छिन्नोद्देश्यताख्यविषयतायाः नृमन्यरूपसमासपर्य्याप्तत्वात् तन्निरूपितविधेयताया अमि सत्त्वेन तृतीयसम्बन्धनिवेशे दोषाभावात्। न च तन्निवेशे फलाभावः। जनराशब्दे उक्तप्रकारेण जरात्वातिदेशाप्राप्तेरिति वाच्यम्, पतितपदस्वारस्येनैव तन्निवेशस्य लाभात्। तथा च कयटोक्तं युक्तमेवेति प्रतिभाति।

कमण्डलुपाणिशब्दात्तृतीयाम्बाधित्वा द्वितीयाया एव प्राप्तिरुपपदविभक्तेरितिन्यायादित्यत्राऽपि शेखरोक्तन्न युक्तमिति तु न युक्तम्। लक्षणवाचकात्स्वार्थे तृतीयाया विधानेन तृतीयाया अपि लक्षणमेवार्थस्तस्य च क्रियाजनकत्वेन क्रियाजनकार्थकविभक्तित्वस्यैव कारकविभक्तित्वेन तृतीयाया अपि कारकविभक्तित्वात्।

गुरवस्तु लक्षणशब्दस्य बोधनमर्थः। किञ्चिद्धर्म्मविशिष्टस्य बोधने प्रत्यासत्त्या धर्म्मवाचकात्तृतीयेति तु सूत्रार्थः।

कस्तापस इति प्रश्नस्य उत्तरमिदं जटाभिस्तापस इति जटाविशिष्टस्तापस इति उत्तरवाक्यस्यार्थः। ज्ञाप्यज्ञापकभावप्रत्ययस्तु शाब्दबोधानन्तर्भावी मानस एव। एवं जपमनुप्रावर्षदित्यत्र समानकालिकत्वं द्वितीयार्थः। जपसमानकालिकवर्षणमिति शाब्दोऽर्थस्तदनन्तरं जपज्ञाप्यं वर्षणमिति मानसो बोधः। कदाऽवर्षदित्यस्य हि तदुत्तरम्। एवं गोषु दुह्यमानासु गत इत्यादावपि गोदोहनसमानकालिकं गमनं गोषु धोक्ष्यमाणासु गत इत्यत्र गोदोहनप्राक्कालिकं गमनं गोषु दुग्धासु गत इत्यादौ गोदोहनोत्त-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रकालिकं गमनमितिशाब्दप्रत्ययः, पश्चाद् गोदोहनज्ञाप्यं ज्ञाप्य-ज्ञापकभावप्रत्ययो मानसः। घटत्वेन पटो नास्तीत्यादौ घटत्वेन पट-ज्ञानातीत्यादौ च इत्थंभूतलक्षणे इत्यनेनैव तृतीया। पटप्रतियोगिकोऽ-भावः स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटत्वविशिष्टः घटज्ञानं स्वप्रकारकत्वसम्बन्धेन घटत्वविशिष्टमिति क्रमेण बोधात्। किञ्चिद्ध-र्म्मविशिष्टस्य घटत्वादिधर्म्मविशिष्टस्य अभावस्य ज्ञानस्य च बोधोऽस्तीति घटत्वादिधर्म्मवाचकात्तृतीया। एवं 'मुखेन सालक्ष्यत लोध्रपाण्डुने' त्यादा-वप्यनेनैव तृतीया। मूलोक्तार्थकत्वे तु विधायकाभावात्तृतीयाया उक्तप्रयो-गेषु असाधुत्वापत्तेः। कदा गत इत्यस्योत्तरं गोषु दुह्यमानास्वित्यादि। इति संक्षेपः।

ननु गोषु दुह्यमानासु धोक्ष्यमाणास्वित्यादौ दोहनक्रियाया अतीत-कालिकत्वेन वर्तमानभविष्यत्कालबोधकप्रत्ययानुपपत्तिः। न च 'वसन् ददर्शे' त्यादाविवात्रापि धातुसम्बन्धे प्रत्यया इत्यनेन भूते एव लट्लटा-विति वाच्यं, तथा सति गोषु दुह्यमानासु गतः, गोषु दुग्धासु गतः, गोषु धोक्ष्यमाणासु गत इति प्रयोगाणामतीतकालिकदोहनगमनरूपसमानार्थ-कत्वेन विभिन्नकालबोधकप्रत्ययकरणस्य नैष्फल्यापत्तेरिति चेत्-न। गुण-भूतक्रियायां प्रधानक्रियासमकालिकत्वं वर्त्तमानत्वं, प्रधानक्रियापूर्वकालि-कत्वं भूतत्वं, प्रधानक्रियोत्तरकालिकत्वं भविष्यत्त्वम्। एतान्यपि लडादिप्र-त्ययप्रयोजकानि। अत एव गमने दोहनसमानकालिकत्वं दोहनोत्तरकालि-कत्वं दोहनप्राक्कालिकत्वं प्रतीयते इति विभिन्नप्रत्ययोपपत्तिरिति प्राहुः।

---

## ३६. रुच्यर्थानां प्रीयमाणः १।४।३३

रुच्धातोः प्रीत्यनुकूलो विषयतासम्बन्धेन प्रीत्यधिकरणवृत्तिर्व्यापा-रोऽर्थः। हरये रोचते भक्तिरित्यादौ हरिनिष्ठप्रीतेर्विषयतासम्बन्धेन तदनु-कूलव्यापारस्य चाश्रयतासम्बन्धेन भक्तौ प्रतीतेः। लष्धातोश्च समवाय-सम्बन्धेन प्रीत्यधिकरणवृत्तिः प्रीत्यनुकूलो व्यापारोऽर्थः। हरिर्भक्तिमभि-लष्यतीत्यादौ समवायसम्बन्धेन भक्तिविषयकप्रीतेस्समवायसम्बन्धेन तद-नुकूलव्यापारस्य च हरौ प्रतीतिः। अतो रुच्यर्थत्वाभावेन लष्धातुसमभि-व्याहारे न चतुर्थी। हरिं प्रीणयति भक्तिरित्यादौ च प्रीधातोः रुच्धातुसमा-नार्थकत्वेऽपि न चतुर्थी। सूत्रे प्रीयमाण इति निर्देशात् प्रीधात्वर्थप्रीत्याश्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्य सम्प्रदानत्वे न तस्य कर्म्मत्वाभावेन प्रीयमाण इत्यत्र कर्म्मणि प्रत्ययानापत्तेस्समवायसम्बन्धेन प्रीत्यधिकरणावृत्तिः प्रीत्यनुकूलो व्यापारः प्रीधात्वर्थ इति रुच्यर्थत्वाभावाद्वा। न तद्योगे चतुर्थी हरिं भजतीत्यादावपि समवायेन प्रीतिव्यधिकरणः प्रीत्यनुकूलो व्यापारो भज्धातोरर्थ इति रुच्धातुसमानार्थत्वाभावान्न तद्योगे चतुर्थी। यद्वा भज्धात्वर्थो भजनं भक्तिभजनयोरनर्थान्तरत्वाद्रुच्धात्वर्थव्यापारो भज्धात्वर्थव्यापाराद्विलक्षणोऽत एव तयोराधाराधेयभाव इति सुतरां समानार्थत्वाभावः। यद्यपि प्रीत्यनुकूलव्यापारत्वेनोक्तसर्वधात्वर्थ एक एव तथापि सर्वेषां धातूनां विशिष्य तत्तद्रूपेणार्थवाचकताया अनुभवसिद्धाया भूषणे प्रतिपादितत्वात् भिन्ना एव धात्वर्था इति युक्तमेव॥

---

## ३७. समर्थः पदविधिः २।१।१

विधीयते इति विधिः, कर्म्मसाधनः। पदस्य विधिः पदविधिः। शेषषष्ठ्या समासः। तथा च पदनिष्ठोद्देश्यतानिरूपितविधेयताश्रय इत्यर्थः। पदनिष्ठा चोद्देश्यता पदत्वेन सुबन्तत्वेन वा साक्षादवच्छिन्ना ग्राह्या। पदविधिरिति शब्दस्वरसात् समासेऽङ्गुलेस्सङ्ग इति सूत्रे समासग्रहणाच्च पदनिष्ठोद्देश्यतेत्यर्थे हि अङ्गुलिरूपपदनिष्ठोद्देश्यतानिरूपितविधेयताश्रयः, षत्वं समर्थाश्रितमेव स्यात् सामर्थ्ये च समासस्यैव सत्त्वेन समासग्रहणवैयर्थ्यापत्तेः। अङ्गुलिपदप्रयोज्या चोद्देश्यता न पदत्वाद्यवच्छिन्नेति समर्थसूत्राप्रवृत्त्या वाक्ये प्रवृत्त्यभावाय समासग्रहणस्य सार्थक्यात्, तेनान्यारादित्यत्र न समर्थसूत्रप्रवृत्तिः। तत्रान्यादिनिष्ठोद्देश्यतायाः पदत्वाद्यवच्छिन्नत्वाभावात् साक्षान्निवेशेन न पदान्ताट्टोरित्यत्र पदान्ताद्वेत्यत्र च नास्योपस्थितिः। तत्रोद्देश्यतायाः पदत्वेन साक्षादवच्छिन्नत्वाभावात्।

समासविधौ प्रवृत्तये सुबन्तत्वेनेतिसंसृष्टोऽर्थो यस्य स समर्थः। तस्य च पदविधौ साक्षादन्वयासम्भवः। न हि पदविधिः समाससंज्ञादिस्समर्थो भवति किन्तु समर्थाश्रितो भवति। तस्मात्समर्थपदस्य अर्श आद्यजन्तत्वेन समर्थाश्रित इत्यर्थः। सामर्थ्यञ्च राजन् अस् पुरुष स् इत्याद्यलौकिकवाक्ये आरोपितमेवैतत्सूत्रसामर्थ्यात्, न तु वास्तवम्। तस्याप्रयुक्तत्वेनोपस्थितिजनकत्वाभावात्। सामर्थ्यञ्च विशेष्यविशेषणभावावगाह्येकोपस्थितिजनकत्वरूपम्। न च घटादिपदेऽपि सामर्थ्यापत्तिस्तत्रापि घट-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यतानिरूपकैकोपस्थितिजनकत्वादिति वाच्यम्, शक्तिविशिष्टशक्तिपर्य्याप्त्यधिकरणत्वस्यैव सामर्थ्यपदार्थत्वात्। वैशिष्ट्यञ्च—स्वज्ञानाधीनज्ञानविषयत्वस्वाश्रयघटितवृत्तित्वोभयसम्बन्धेन। राजपुरुषपर्य्याप्ता राजसम्बन्धिपुरुषत्वावच्छिन्ननिरूपिता एका शक्तिस्सैवैकार्थीभावरूपा। सामर्थ्यं तत्र राजपदनिष्ठशक्तिवैशिष्ट्यं स्वज्ञानाधीनज्ञानविषयत्वं तत्र शक्तौ वर्त्तते। अवयवराजादिशब्दनिष्ठशक्तिज्ञानादेव तस्याज्ञानात्। स्वाश्रयो राजादिशब्दस्तद्घटितो राजपुरुषस्तद्वृत्तित्वं चास्ति। घटादिशक्तिश्च न शक्तिविशिष्टेति न तत्र एकार्थीभावः। आदेशनिष्ठशक्तौ स्थानिशक्तिवैशिष्ट्यवारणाय द्वितीयस्सम्बन्धः। घटत्वावच्छिन्ननिरूपितशक्तौ कलशपदनिष्ठायां प्रजापतिनिरूपितायाः ककारनिष्ठायाः शक्तेर्वैशिष्ट्यवारणाय आद्यः सम्बन्धः। न चैकार्थीभावाख्यशक्तिस्वीकारो व्यर्थः। क्लृप्तयैव राजादिपदनिष्ठशक्त्या राज्ञः पुरुष इत्यादिवाक्यादिव राजपुरुष इत्यादिसमासादपि शाब्दबोधोपपत्तेरिति वाच्यम्। रिद्धास्य राजपुरुष इति प्रयोगाणां साधुत्वापत्तेः। रिद्धस्य राज्ञः पुरुष इत्यादिवाक्ये राजनि रिद्धाभेदान्वयस्येव समासेऽपि राजनि रिद्धाभेदान्वयसम्भवात्। सिद्धान्ते तु राज्ञो विशेषणतयोपस्थित्वेन घट इत्यादौ घटत्वे नित्यस्येव पदार्थैकदेशत्वेन राज्ञि रिद्धान्वयासम्भवान्न दोषः। विस्तरस्तु उत्तरार्द्धे वक्ष्यते।

इति महामहोपाध्यायमैथिलमिश्रोपाह्वश्रीजयदेवशर्मविरचिता शास्त्रार्थरत्नावली समाप्ता

मुमुक्षु भवन वेद वेदाङ्ग पुस्तकालय
ग्रन्थालय
आगत क्रमांक......
दिनांक......

मुमुक्षु भवन वेद वेदाङ्ग पुस्तकालय
आगत क्रमांक......0073......
दिनांक......16/5/80......

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

